# सुदामचरितम् ॥



डॉ. [illegible] देव त्रिवेदी 'इन्दु'

# ॥ सुदामचरितम् ॥

डा. पन्नालाल गोस्वामी
महोदयानां




डा० इन्द्र देव द्विवेदी "इन्द्र"

साहित्य वेदान्ताचार्य, एम०ए० विद्यावारिधि (पी-एच०डी०)

वाचस्पति (डी० लिट्)

रीडर (साहित्य), केन्द्रीय संस्कृत विद्यापीठ, लखनऊ

प्रकाशक :—श्री काशीनाथ द्विवेदी
भारती साहित्य परिषद्
गोमती नगर, लखनऊ।

प्रथमावृत्ति १०००

मई १९९२

मूल्य—रूप्यकमेकशतम्
रु० १००/- मात्रम्

संपर्कसूत्रम् :

डा० इन्द्रदेव द्विवेदी "इन्द्र"

१. केन्द्रीय संस्कृत विद्यापीठम् गोमती नगर, लखनऊ।

२. ग्राम व पत्रालय—लहठान, जि०—भोजपुर, बिहार।

३. भारती साहित्य परिषद्,
गोमतीनगर, लखनऊ।

मुद्रक :—एम० एस० प्रिन्टर्स, मायानगर डालीगंज, लखनऊ

# ॥ किञ्चित् ॥

सुदाम्ना श्रीकृष्णस्य हृदयपरिवर्तनं गान्धिनो हृदय-परिवर्तनसिद्धान्तेन प्रभावितमिव चित्रितं सुदामचरिते महत्त्व-पूर्णमस्ति। बलेन धनापहरणं समताविधायकं भवितुं नार्हति। यतो हि हिंसया समुपार्जितं वस्तु हिंसयैव समाप्तिमेति। अतः सत्यस्य प्राप्त्यै लोकेऽहिंसाया शरणमनिवार्यं प्रतिभाति।

सुदामचरिते दीनेन सुदाम्ना भगवतः श्रीकृष्णस्य लक्ष्मीपतेर्हृदयपरिवर्तनमहिंसया साम्यप्रवर्तकमस्ति।

महाकाव्येषु प्रकृतिवर्णनं ऋतूवर्णनं जलक्रीडादिवर्णनं साम्प्रदायिकमुचितं चास्ति। सुदामचरितस्य तृतीय सर्गे मयापि वर्षावर्णनमारब्धम्। विभिन्नानां छन्दसां प्रयोगो मानसे मे समायातः। यद्यपि महाकाव्येषु गतेरवरोध ईदृशेन संजायत एव। अतो मया छन्दसां दिग्दर्शनमपि चमत्कारोत्पादनार्थमत्र प्रत्तम्। छन्दसां चयनं नाट्यशास्त्रावलोकेन वृत्तरत्नाकरादिदर्शनेन च संजातम्। नामान्तरं छन्दसां विचारणीयमासीत् एकस्यछन्दसो विभिन्नानि नामान्याकरग्रन्थेषूपलब्धानि सन्ति। मह्यं यद्रुचिकर-मासीत् तदेव ग्राह्यमभूत्। कानिचित् छन्दांसि नूतनान्यपि सन्ति। विदुषां तदपि स्वीकार्यं छन्दसां प्रस्तारादिक्रमात्वात्।

अर्पाकाल: कदाचित् मेधाछन्न मात्रो कदाचिच्च जलासार-पूर्णो भवति कदाचित् कारकापात.कदाचिदातपापातश्च । अस्यां परिष्ठितौं मनोभावानां परिवर्तनं एवमेव तद्गतानां अभिव्यक्ति-क्रमाणां परिवर्तनं च छन्दसां परिवर्तनस्यौचित्यं साधयति ।

सुदामचरिते महाकाव्ये एकविंशतिः सर्गाः सान्ति । अत्र मुख्यतस्त्रिशत् छन्दसां प्रयोगो विद्यते । प्रत्येकं सर्गाणामन्मे पद्ये मालिनी छन्दसः प्रयोगः परम्परानुसारी बिद्यते । अत्र सुदाम्नः सम्पूर्णं जीवनं चित्रितमस्ति। विद्यालयगमनंम्, समिदा-हरणम्, छन्दोवर्षा, मित्रान्वेषणम्, मुनिदर्शनन्, मुनिवर्णनम्, सदुपदेशः परावर्तनम्, गृहमार्गं, भुक्तिः, भार्यानुनीतिः, भर्यागु-शासनम् जीवनपथम्, द्वारिकापुरीवर्णनम्, राजनीतिसंवादः, गृहागमनम्, पुनर्मिलनम्, भवभोगः, गृहत्यागः, मुक्तिश्चेति सर्गाणां नामानिासन्ति ।

विदुषां समक्षं कृतिरियं समर्पितं विद्यते यदि किञ्चिदस्ति तर्हि कृतज्ञोऽस्मि भवताम् ।

इन्दुः





# सुदामचरितम्

## ।। प्रथमः सर्गः ।।

कः शासयति चिरं जगति
मनसः सुपदं किमु राजते ।
विस्मृते ! सदसि न हितास्पदे !
जन जीवने कुरु ताण्डवम् ।।१।।

फलति पुष्पमयी लता
गहने कंटकः विनिर्गता ।
विपरिवर्धयते समुल्लासनम्
विरहवेदनयाकुलजनमनः ।।२।।

हे जगदम्ब ! तवेप्सया
जगति जीवगणाः सदा ।
प्रचरन्ति समीक्षयितुं नयं
जगदलं तव भूतिरहः स्थिता ।।३।।

अवश्यमेव जीवने हसनम्
नहि वियोगगणेन प्रबाध्यते ।
अतएव सदय किमु खेदयसे
मनसि विकारहरं भज ।।४।।

यदि जगन्न परिवर्तयेन्
मरणस्य नयाः विफलीभवेयुः ।
ये खलु विभ्रमदाः वृद्धौ
स्थितिन सुखकारिणी भवेत् ।।५।।

नहि तस्य करुणागारस्य
युगसृजः गणनं विनयानयम् ।
मधुरता सरलता च कोमलता
चिरमभावववत्यः सर्वाः ।।६।।

दिवसागते रविर्विरमति
तापास्तंगते मधुर्वर्षिणी ।
किमु न मानवपवित्रवाञ्छिता
मनसा साभिधीयते प्राप्तिः ।।७।।

सौभाग्येन जनो बहिः
सन्मध्ये तिष्ठति परिहृतगृहः ।
धन्यौ तस्य पितरौ भवने
यौ मुदा तमालिंगतः ।।८।।

अर्हसि गन्तुमना गुरुन्
प्रियङ्करः कुलजायाः रीतेः ।
शिक्षायै वस गुरुणामन्तिके
भव समुचितः सदसि ।।९।।

रुचं पथि विघ्नैः कलितां
हृदयंगमामतिवीक्ष्य ताम् ।
चलितं कोमलागजं
जीवितमात्ररहस्यमुद्धारकम् ।।१०।।

समसमुदीरणेन पाथेयितः
ससुतो द्विजः समुदाननः ।
गृहदेवतायां श्रद्धया नतः
सुपथगामी समभवत् ।।११।।

कवलयन् परमार्थमचिन्तितं
स्वशिशुकं स्वहिताहितम् ।
स्वरसिकतामधिकृत्य संपदि
मनुते हृदि सुखमयं जगत् ॥१२॥

भवनभुक् क्व वनेचरः
भवन्ति तद्रूपसंपदः ।
नहि संशयः खलु जायते
मनोहरी शास्वदाकृतिः ॥१३॥

समुत्सुकः सोऽपि मन्यमानः
कवयितुं प्रेरितवान् स्वसुतम् ।
समुपलभ्य समं विचारणम्
उपदेशवाचि कर्षितः सुधिया ॥१४॥

निदधातु मानसमिलितं
प्रकृतिप्रतिमानं सर्वदा ।
प्रकृतिस्त्वामभिशिक्षिका
सरहस्य वाणी श्रावयते ॥१५॥

दर्शय तैस्तपरिस्थितैः
किमु न लक्ष्यमवेक्ष्यते ।
आह्लादयितुं समागतः
सर्वः कोशभरो हरेः ॥१६॥

अकृपण ! धन्यमहो विधे ।
यदकरोत् स्वरुचा सुरुचिम् ।
चतुर्दिग्भ्रमकारणमागतं
सर्वं वस्तु रमणीयकं पदे ॥१७॥

चेतयतु कर्त्तव्यमयीं कृतिम्
दास्यति सा सर्वं तुभ्यम् ।
लोकगता जीवनायिता
जनता ब्रह्मकलाकली ।।१८।।

चलति चलाञ्चलं चारुतायाः
रजनी रराज किं सुपथि ।
दिनकरः सुकरोऽभवत्
देवता अपि नराः वासहेतुना ।।१९।।

संज्ञया सह वनराजयः
कृतार्थयन्ति तमीशमागतम् ।
गुणलोभस्य भ्रान्तिर्जनिता
तदुद्देश्यपरम्परायाः सदृशा ।।२०।।

शतधा सहस्रदलागमनं
प्रणवं विधाय मनोभावनया ।
पितुराज्ञया ददते वाचः
शिशुदशायामवलम्बितः ।।२१।।

मयिपितः । वचनं देयम्
प्रणयः किमु याति न दिनद्वयम् ।
परिवर्तनमेव सुसत्ययुतम्
अमितं समितं परिणाममयम् ।।२२।।

वर्षन्ती काव्यरसधाराः
हृदस्यसा भावना ।
सुदूरगता मातृभूमेः
अखिलं [illegible] सुहृद्गणः ।।२३।।

समुचिताश्चातका: पूरिता:
दोषाकरो विलयगत: ।
सुनयमीनस्य धारणम्
कृतं परितो धीवरै: ॥२४॥

धन्यास्पदं चन्द्रत्वमेक एव
येन सहास्ते नवा विमला ।
तमसोऽन्तकताराविलि:
शून्ये स्थिता परमार्थत: ॥२५॥

लोहितांगविसारिणी कान्ति: मोहं जनयति कस्य न
अयं प्रभाव: प्रभुगुणस्य भाविप्रियभाववेदक: ।
मुखं सुपद्मं जलजं नेत्रं कर: सुकारु: सहजारुणश्च
कामस्य भाग्यावरोधको ऽहो! विमर्शोऽनवगम्य: ॥२६॥

बाध्यभूतबन्धनं न विद्यते पुराकृतै:
जालमायिकं जगद् विभाति ज्ञानसंभवे ।
अद्य करणीया कृति: समाप्यते मुदा जनै:
स्वर्भविष्यतीति चिन्तया नहि विस्मार्यते ॥२७॥

अज्ञाविराममेति कला विधेरपि वृद्धांगते
तस्माद् रचना सतां दृष्टिपथं पुन: पुन: ।
समाप्यते समानमेव धन्यमस्ति विज्ञानतति:
विधि: सदा सुभाजनं जनेषु वैविधं परम् ॥२८॥

चलन्ती बाहु: युगलावभास:
विराजते रूपहराशिसीम्नि ।
उपहासव्यूहं परितो ददती
किमद्भुता ब्रह्मपरेयं सृष्टि: ॥२९॥

उदयस्य कालमात्रं सर्वं साधिकतरं वसति नु गृहे ।
तपः परिणतिर्जाता वृद्धावितरजगति दिर्गमे ।।३०।।
प्रसवकरसमीक्षा सा नित्यं ब्राह्मणपत्न्यः वाधिकेव ।
निजवशफलं न मत्वा जनकः सुखविरहितो जातः ।।३१।।
समागतवचोभिः सा दिव्यगणानां नु कृतवती पूजाम् ।
स्वर्गस्य देवगाने सौम्या भुजबलविजये नता ।।३२।।
सापि सरसा सभागा वामा धारयति सार्थिकां वार्ताम् ।
प्राप्तवती पुत्रजन्म भाग्याद् गृहकर्मणि संगता ।।३३।।
विदुषां संस्थानं तत् साध्यं चञ्चाश्चलन्ति सस्मृहाः ।
सीमान्ते सममध्ये दृष्टौ वितत्य यथागतितः ।।३४।।
साम्याधीतं वस्तौ सत्वे संयमनगीतिभरार्दिते ।
सादरतो हृदि रूपकं परोक्षकालागते शंके ।।३५।।
दिवसे वृद्धिर्जाता समागता प्रीतिरम्यरूपा सा ।
सौख्यं वर्णनयोग्यं रजनीपतिकिरणजालैस्तत् ।।३६।।
भाव्यसुख कारिकेव देवगणगणनपरायणमानसा ।
भूतेच्छया परिणमिताविराणिणी हृदयभाषा किम्।।३७।।
शिशुकं विलोक्य नवलं प्रसुप्तजागरणभासुरविभालम् ।
मा मेत्याह्वान तद् गन्धर्वस्यगमनकंधरम् ।।३८।।
अत्यर्थं जीविततता लब्धा पटुता समीपगतया नु ।
मार्गः प्रकाशपुञ्जैर्मोहयति विकलपथिकहृदयम् ।३९।
तपसा गुणगणनाभिर्देहस्य कान्तिभिरेवत्रे सुबलम् ।
दिव्यतनुभावितबला विभाति रम्या दिवाकरभा ।४०।
शय्यामधिगतमातः प्ररुरोद कलकलभावनावशतः ।
कुतः कुतः सम्भ्रमकः परिचय[illegible] हेतुरवासीत् ।४१।

जीवितमात्रतनुः सः मातृगणस्य विमलकमलकरांगे ।
केन विकारेण सुतः किञ्चिन्मासदिवसाधिकरम् ।४२।
मातरि बहुदिवसाशः भारतजातः समागतः शिशुकः ।
तं सुरलोकविरागं केन भवेयुर्विलोक्यपराः ।४३।
दूरमपि कराभ्यां स. लोलांगः संकरोति पारयितुम् ।
भगिनी करस्थितं तं वास्तुकलोभेन पाटलजम् ।४४।
वासन्तेऽपगतास्ते सालसभरणसुखदाः विशदसंगाः ।
धन्यो दिवसः प्राप्तो जाताश्चर्यभरिताश्चलिताः ।४५।
सत्ये बन्धनभावितं नवजनैर्विद्यातपोभास्करम्
सामोधं हृदि सारदैः सुरगणैः सर्वत्र किं रंजितम् ।
ध्याने तत्परता मता नवलता पुत्रोत्सवे लग्नता
भक्त्या नो यदि वाञ्छति स्वरयशो तस्यास्ति कीर्तिर्नवा ।४६
आपाप वनवासदुःखततिभिर्भोग्यं समाप्यामयः
पुत्रेणाभिमतेन सयुतजनो सानन्ददाता नरः ।
हैमं पर्वतराजतो विगलित कस्यास्ति नो पावनम्
आरण्ये समुपासते सुविमलांवृद्धि तपः संस्थितः।४७।
कः को धामविनिर्मितो विवशता दर्शयते सत्वरम्
सौगन्धर्यं कमलाकरे विकसितं धाराजलैः शीतलम् ।
भन्याकान्तिरधो विसारितविभा किं ना विभासकरी
नेत्रैः रागभरी विभावसुसखी पुष्पं विकासायितम् ।४८।
रासे पद्मविकासमेति सबलं मीनैः समाकर्षितम्
कंदर्पेण पराहताः सुजनताः सेवाविधाने पराः
रात्रौ सारसपंक्तिभिः समागताः वायुभिरान्दोलिताः
आनन्द प्रददाति दीनजनतानन्दः प्रकारः सुधा ।४९।

प्राकारे बसतिं विहाय जनता गाणं विदोग्धि करैः
धातुर्योगदवानले विधिवशाद् गातुं न शक्तो जनः ।
कासारे समये विधातुमनसः समज्जनं सज्जनः
ध्याने कालसमर्पितः शुभकरैः सेवापरैः सोकरः ।५०।

रक्ताम्भोजविसारिदेहनतिभिः संपूर्णशोभामयम्
याथात्म्यं रचितं कलाकरसमं रोमावलीकान्तिभिः ।
सौंदर्यं समितं सलीलमरगं भाग दिवादागतम्
दृष्ट्वा मातृगणेन मानविहितो देही विदेहाकृतः ।५१।

विस्तारापरभावनं सुपरमानन्दात्मनि विन्दत्र म्
भाग्याद्दत्तमिदं नु सुदिनैरासादितं पुत्रकम् ।
ब्रह्मा वेद समागमं सुचरितं कालावबोधास्पदम्
किं प्राप्तं नहि पुण्यभाग् सुचरिताख्यानं जगद्दीपितम् ।५२।

पुत्राप्तिः सुखसंततिः सुमहसांराशिः सभापूजिता
धन्याधन्यपद विचारविषयं तेनैव लोके स्थितम् ।
नारीणां तु विशेषतो विगणनं पुत्रेण जातं सदा
ब्रह्माजीवविनिर्मितं यदि भवेऽभावामदं नोचितम् ।५३।

कार्याकार्यविवेकिने शुभचरायाप्यं न किं भूतले
तस्यैव प्रथमाभिधेयमनिशं पुण्यार्जितं भावितम् ।
येनाप्तं गुणिनां वरञ्च समताधार सुपुवास्पदम्
तस्मै योग विरागजं सुतपसानीतंफलं वाञ्छितम् ।५४।

प्राप्तः शिशुः सोऽखिलवेदसंज्ञं
त्रिविष्टपात् प्राप्तयशाः वरिष्ठम् ।
नाम्नोज्जयिन्यामतिशिष्ययुक्तम
तद्विश्वविद्यालयमन्तकाले ।५५।

पिता सुदाम्नः सुनृपो विमुक्तः
कीर्तौ वदिपान्तो विधिनात्मज्ञाता ।
द्रविणान्वितायां दिशि दक्षिणस्यां
गृहंस्थितो दूरगतं विचिन्वन् ॥५६॥

सत्यण्डितो यो जगतीस्थितोऽपि
दिव्याशुमन्तं परम जुहोति ।
प्रेम्णा किमास्ते नहि लभ्यरुपं
करोति किं नो समता जनानाम् ॥५७॥

दशा दिगाभान्तरबाह्यरुपा
तनोति नृत्यं वहिरन्तरे च ।
नृपस्य लोकेऽनवलोकिताऽपि
स्मितेव साश्चर्यंगता विकारा ॥५८॥

न तद्गृहं यन्न विराजतेऽहो ।
वित्तस्य भागो न समो न कुलं ।
शमश्च संतोषवृतं नृपस्य
संतोषितास्ते सुखमामनन्ति ॥५९॥

भूःसा समस्ता प्रकृतेर्दशायाः
विपर्ययात् साधिकतां विभेजे ।
सा संपत्तिः स्थावररूपवर्तिः
सभासदः प्राप्य चलां निहन्ति ॥६०॥

धरार्धरन्तः सुकृतांगभाजः
वृद्धैः सवत्सैः सुखसंगमेन ।
रसैः स्फुरन्तो हृतमानसा न
कस्याप्यलभ्याऽवलोकनेन ॥६१॥

चतुर्विभागा सुबलैः सुकोशैः
सा राजधानी समरांगणं किम् ।
विराजते किन्तु न हिंसया सा
संपूरिता ऽद्भुतरूपतायाम् ॥६२॥

बसद्वसंते सुखसालसास्ते
धन्यं दिवेतीह वदन्ति सत्यम् ।
ग्रामेनवोद्गारमवाकीरन्तो
बालातपे धूसरितांगबालाः ॥६३॥

वृद्धात् स्वखेलाः परितः समीक्ष्य
प्राप्याथु मध्ये स्वसभं कुचन्ति ।
सभा सहर्षाः जननीं स्मरन्ति
बाल्यारवः सौख्यतरो नितान्तम् ॥६४॥

वातास्तरंगेण यदा कदाचिद्
दूरंगताः प्राप्तुमशक्यखिन्ना ।
हासैः शरीरोऽपि सुजातभूतिः
यदा जनेनान्यपथादनायि ॥६५॥

यदा कदा ते शयिताः समीपं
निगुह्य सर्वं रुदितं रसन्तः ।
संप्राप्तुकामाः परिखेदयुक्ताः
इतस्ततो वृद्धगणैर्मिलन्ति ॥६६॥

आदाय पुष्पं नखरैर्विलूनम्
खेलत् सहर्षाधिकल्लोलरंगाः ।
पराजयेनान्तरिताः भवन्तो
विडम्बनं देवतकन्दुकानाम् ॥६७॥

आस्पन्दनेनस्तवनागतं यत्
सुविज्ञजिह्वाशतनृत्यमानम् ।
प्राप्तं सुदाम्ना पठितुं तदेव ।
गुरोः प्रभावं सहतेऽखिलोऽत्र ॥६८॥

अजस्रवाताकरणेनशान्ति
सम्प्राणन्तो विहितानुबन्धाः ।
आसादयन्ते यतितुल्यरूपाः
शान्तिर्दिवार्केऽपि न लब्धुमर्हा ॥६९॥

वैमानिकैस्तैर्भरितैकदेशः
लोकायते ज्ञानविशुद्धदायः ।
सुशिक्षकाः तर्हि रमन्ति मुक्ताः
एकान्तवासैः सह सत्प्रतिष्ठा ॥७०॥

काम्योत्तमा श्रीः स्वयमेति यस्मिन्
तीव्रं तपः सोऽपि चरन्ति मुक्ताः
आश्चर्य्यमेतन्नहि, सः प्रतायः
तपोत्कर्षं प्राणभृतां वनं यत् ॥७१॥

विद्द्वरेभ्योऽग्रसराय नाम्नां
किं किं न साध्यं जगतीह याति ।
एतत् प्रभुत्वं यदि नाप्यमस्ति
किं पौरुषं नाम जपेऽभिमानैः ॥७२॥

देवांगनाभिः परिवेशितायाम्
तपः सभायां सहजा विभूतिः ।
दैन्यानुभूतौ दिवसं नयन्ति
पूर्वेरिथता साधुगणाः मुखेषु ॥७३॥

न कोषितोऽत्यन्तधनाधिकारी
नित्या तु विद्या विपुलाधिदेवी ।
सैवस्ति संतोषमयी मनःसु
विद्याऽनवद्या जगतः प्रियास्ति ।।७४।।

क्रीडामलाः मातरि पातनेन
प्रेमास्पदं क्रोधमुखं ददानाः ।
स्वजन्महेतुं तदभाग्यरोधं
बिनाऽपि यत्नं प्रकटीप्रयाति ।।७५।।

चिन्वन्ति लक्ष्यं मुनिमानसाः किम्
संतोषमाप्तुं हृदये विशाले ।
बिकारलेशाः सरलानुभावैः
सदा वसन्तो विजनावनीते ।।७६।।

कृष्णः सुदामा पठतश्च तत्र
प्रेम्णा समानीय गुरुं महान्तम् ।
तयोर्निवासेन महाविभूतिः
पद्मावती ज्ञानवती बभूव ।।७७।।

निमित्तकेतुः पवने प्रमत्तः
वितानतानं सततं सिनोति ।
शरीरिणां साधुपदं समर्थम्
संप्राप्य मुक्तौ पुलकांकुराय ।।७८।।

सांदीपनिस्तत्र सुराजतन्त्रे
संशिक्षयन् छात्रवरान् सुविद्याः ।
सुसार्गमन्वेषयितुं विभावैः
कारुण्ययुक्तं महतां [illegible] ।।७९।।

केकावलीभिः कलितासुदिक्षु
धूमोद्गामेनासितमभ्रजालम् ।
तेन भ्रमंश्चातकवर्गतापी
विस्तारमापे कषणस्य कार्ये ॥८०॥

व्यवस्थिता सा सुमतिः कदाचित्
एकान्ततो भाग्यविपर्ययेण ।
तदा जनाः ज्ञानसमागमेन
परां मुदं यान्ति महोत्सवाय ॥८१॥

आगामिगर्तेऽपि निमग्नभावम्
को मां सुसंस्मारयितुं समर्थः ।
प्रज्ञाधिदेव्याधिकमानयोग्या
पराहता केन परिग्रहालम् ॥८२॥

न शास्त्रमानेन भवेत् सुपुण्यम्
न सज्जनत्वं सुयशोऽर्जितेन ।
सद्वंशजातोऽपि कुकर्मलीनः
स्वभावमाक्रम्य जनो न जातः ॥८३॥

गान्धर्वगर्भेण गभीरतोषैः
साद्यन्तगन्तुः जननी सुपूज्या ।
अतोऽनुसाधुः समयेन युक्तः
परोपकारे तनुमर्प्यमाणः ॥८४॥

विचारशीलेन विभेदमान्नाः
लोकाः परं व्यत्ययमानन्ति ।
किमर्थमन्यान् प्रति रोषरुष्टाः
स्वार्थस्य नाशं गतलं लभन्ते ॥८५॥

जीवेषु भोग्यं जगतः प्रसिद्धम्
तं प्राप्य लोकाः सुखिनो भवन्ति ।
सन्तो विना तन्निखिलप्रभावाः
सर्वैरभिव्याप्य गृहं वसन्ति ॥८६॥

स्थिरानुरागैः सहितातिलोकैः
प्रशस्यमाना ऋषयोऽभिमन्द्याः ।
अनल्पचेतांसि विभर्ति हृद्याम्
प्रसन्नवाणीं मुदितामलाञ्य ॥८७॥

पृथग्गतास्ते वनभागदूरम्
कस्मैश्चिदाकारनिगोपनाय ।
क्रीडाकृते पाठसमाप्तिकाले
वप्सान्निवापुः समजेषु तत्र ॥८८॥

पणविलम्बेऽगृहनामकेऽस्मिन्
तपः प्रभावाद्विजितेऽलंकानाम् ।
तेषां प्रतापानलदाहमत्या
नक्तं गता वासरशोभितेव ॥८९॥

फुल्लैर्द्रुमैर्देवगणैः सुरम्या
द्रव्यानदी गर्जति पुष्करीव ।
सरःषु रम्याः जलजातसंघाः
स्फुरन्ति सम्यक् सलिलेऽखिलेऽत्र ॥९०॥

सकृतजपतपसोः पुत्रः सुदामा स्वघाबि
परिगतसुभगैर्बाल्यांगतैर्विप्रमाणैः ।
गतमखिलकुदैन्यं वाल्यकालं व्यतीत्य
बहुकल[illegible]ते [illegible]हूर्तमुपयाहि ॥९१॥

उदधि पुलिनशोभां सर्वकोशावधाराम्
पशुपतिचरणाधीवां सुमान्यां प्रपश्यन् ।
लघुपवनसनाथो मार्गखेदं विगव्य
तणिमयशुभभासां भव्यशालां ददर्श ।९३।

चिरयति शिशुरांशुं ग्रीष्मकालागतेन
शतदलकमलामोदी दिवा जाड्यहेतुं निवर्त्य
इति रचितविरोधं सांध्यमुच्चारकैस्तैः
जगति भूतनरांशैः किं न कार्यं विधेयम् ।९४।

विमलमणिविकासो याति रात्रौ सुधांशोः
गगनसुतलमेवागत्य वासं सुजातम् ।
कपिलसुजलकान्तिर्लोकगा भाति यत्र
परिगतसुमवर्णं स्थानमानं समीपे ।९५।

ललिततमकलायां सानुरोधः प्रशंस्यः
पितृसहजवगामी छात्रवेशानुरक्तः ।
मुनिसुवनसहायो ब्रह्मचर्याश्रितः सः
कृतसुभगसनाथो द्वाः स साज्ञः विवेश ।९६।

लिखितनवविकासो दासवेशेन तत्र
कृतकुहनसनाथं भूमिदेशं वभूव ।
सदयनिहितशोभाः भक्तकोटि समीक्ष्य
विजितचकितनेत्राः सर्वलोकाः समाताः ।९७।

कुवलविषमकान्ते मौलिबासे वरायाः
एकसमयशुभाहें संगमाप्य प्रभाते ।
जगति विमलमित्रं कृष्णनाम्ना प्रसिद्धम्
विरहितनप्रवेश मित्रभावं चकार ।९८।

प्रतिदिवसविहारे खेलसारे सुदामा
सहचिरगृहगन्ता देवधाम्नि स्थितः सः ।
गुरुपठनसमाप्तौ स्वाध्यमाप्तुं नयेन
परिचरति कथायां सौम्यदेशे स्वदेशे ।९९।

अपगतबहुकाले देवपूजाश्रितौ द्वौ
गुरुवरशमदाज्ञ्या प्रेरितौ कुञ्जमध्ये ।
स्थितजनरहितेऽरण्ये सुकार्यस्य हेतोः
द्रुतमुगविकृतेन्द्रायाश्रमाद् जग्मतुस्तौ ।१००

इतीन्द्रविरचिते सुदामचरितमहाकाव्ये विद्यालयगमननामा
प्रथमः सर्गः समाप्तः ।

# ॥ द्वितीयः सर्गः ॥

गुरोः प्रियायाः वचनं सदुक्त-
मुपास्य तौ प्राप्य च प्रातराशम् ।
आहर्तुकामैः समिदग्निभाजम्
दिशः क्षणेनोपशमं ददन्तौ ।१।

लोकाभिशंसाहितनन्दनौ तद्
वेगैर्दिशन्तौ च धरावदातम् ।
मीमांसयन्तौ कुलगीतकानि
प्रसन्नभावैः सुवनान्तमाप्तुः ।२।

वनस्पतीनां महतां निकुञ्जे
मध्याटवियंत्र मनोरमांगा ।
स्थिता निखाता परिखेव भूमेः
संरक्षयन्ती स्वपुर महान्तम् ।३।

नैजा प्रसूतिः परलोकसंपत्
न पुण्यहेतुर्नहि संगता या ।
सहस्रजीवैर्वशितेन राज्ञी
विराजमाना वनराजलक्ष्मीः ।४।

चलायमानैः पवनैर्वितानैः
सैताम्बुछायश्चलभानुजातः ।
मदाऽतटेऽस्मिन् भवभालभासि
मृगालिदुर्गम्यविधिर्बभासे ।५।

तयोः श्रियो वृक्षपरम्परायाम्
जडीकृतादेॅवगणा इवासन् ।
शास्वत् प्रचारैरपि ताः स्थिरांशा
मृगीगणानां सुमताः प्रियाभैः ।६।

तद्दर्शनायाकुलितोऽलिवालः
प्रफुल्लगन्धैः रजसाभिवन्ध्रः ।
संहृत्य मायां परितोऽभिगीतैः
संतोपपानेन महत्त्वमाप ।७।

आमोदनेत्रैः समुपेत्यभाग्यम्
तत्रत्यगन्धी सरलो वनेज. ।
पादम्बुजं स्पर्शयितुं वियत्नैः
विस्तारयामास सुखेन छायाम् ।८।

सुमानि तन्नन्दनमानहानेः
रेजुः समालोक्य विकासभासैः
चक्रुः परागैर्दहनोत्सवं तद्
दिनस्य मानं हृदिसाद् विधाय ।९।

स्वकीयभेदं जगति स्थिरान्तम्
सिद्धं न कश्चिन्मनुते शुभाय ।
जडोऽपि चैतन्यसमं समाभूत्
सत्यं समायाति समक्षमेव ।१०।

माता शिशून् पृष्ठतलं निधाय
स्वकोटरं याति नयानुसारम् ।
वित्तेयभावैः सह शिक्ष बालम्
ज्ञानं ददात्येव वियोगयोगैः ।११।

इदं हि कार्यं मनुवंशजातैः
सुपद्धतिं प्राप्य समाजवासम्
अनेन मार्गेण गतिर्नराणाम् ।
विरुध्य तां नास्ति सुजीविताशा ।१२।

ऋषेः कृतं किं वनराज्ययोगम्
पुराधुना संभजते रमेशः ।
संहृत्य शोकाश्रयकौतुकं तद्
लोकावशः सो विमलैर्मनोभिः ।१३।

शुकास्यवाच्यं श्रवणाधिपेयम्
आनन्दहेतुः परमं वनेऽस्मिन् ।
सता सहावासकरो न कोऽस्ति
नेच्छादृशो यः स्वगतं प्रमाणम् ।१४।

एकान्तसेवां द्विजपंक्तिरग्रेऽ-
करोद् वसन्तस्य न देहमायाम् ।
किं दर्शनं ते हृदये धयन्ति
यैरात्मनीड स्ववशं विकीर्णम् । १५।

कयाऽपि शक्त्या वलकर्षितादिक्
संनानरूपैश्चलतीह सम्यक् ।
न कैश्चिदस्त्रैः परिबाध्यमाना
संरक्षिता लोकगतिः समन्तात् ।१६।

तपोधनानां प्रमिताः सुदाराः
सुदर्शनेनानयनं पुनातुम् ।
व्यक्त्वा सुकार्याणि वशीकृताः नु
ययुः प्रपद्याश्रमकंदकेभ्यः ।१७।

वातायवः प्राप्य वनान्तपंक्तिम्
पञ्चास्यनेत्रैः सुतनुं रहस्यन् ।
आलोकयत् तावतिसंभ्रमेषु
भयं विहायेश्वरसंगमेन ।१८।

पिपीलिकाः यान्ति सहानुगैः स्वै-
र्नवीगृहं हर्षभराभिरामाः
मन्ये समाहारसदीक्षणाय
पूताश्रमं पुण्यपराक्रमेण ।१९।

बलिष्ठपादेच्छदभारिते ये
क्रौञ्चाः वसन्त्योन्नतकोटरेषु ।
अन्यागताघातनिवर्तनार्थम्
नीचैः प्रवासे स्वमनो विचक्रुः ।२०।

पत्रं पुनातुं पवनः प्रयाति
धराजले गन्धहिमे ददाते ।
यदृक्षया छिन्नछलौ खमग्नी
समे सहाय्याः सुखदाः जयन्ति ।२१।

उच्चैः समासाद्य ददर्श तौ सा
सुधाधिकन्यातिथिभारवेत्री ।
गतौ पदाती सुतरंगमालाम्
गुणाः विमुह्यन्ति चरावरेभ्यः ।२२।

मनुष्यदेहौ जयिना नरेण
प्रतीतिहेतू षररामरूपौ ।
अजस्रसौंदर्यकुमाररासैः
भूमौ प्रयातौ महिमामृजाभिः ।२३।

अपूर्वभास्ता इति मन्यमानैः
कोकैर्विलासः क्रियते भ्रमेण ।
रविस्तु संध्याकरणे सयत्नः
चन्द्रायमाणो जलधिः प्रमत्तः ।२४।

विमानवाहैरिव संचरन्ति
द्यौ व्यालिखद् भानुमतः सहाय्याः ।
ससर्पिकीटाः समये सरन्ति
स्वयं गृहाराममनेकमादैः ।२५।

विरामवत् तद्हृदयं जनानाम्
कर्त्तव्यधारापगमानुदेशे ।
जडात्मकानामतिभूमिसौख्यम्
किं नाम नाप्तं मनुजाश्रयेण ।२६।

आकीर्णशस्ये पवनानुकूले
इतस्ततस्तामरसाभिलिप्ते ।
दूरायितौ धोरतरे समस्ते
विस्फारितं क्षाममदं समेत्य ।२७।

दलालिकुञ्जे मधुरं विरौति
प्रातश्च सायं सुमनायमानः ।
तपश्चिनोतीत्यनुमानयोग्यः
पक्षाकरः कोकिलनामधेयः ।२८।

द्विजाः समुच्चैश्चमरीं विलोक्य
अञ्च्वा चरन्तश्चलनाय चारु ।
चुहूं चकार चलिते विभान्ती
चन्द्राञ्चला सूर्यमयांसि राजिः ।२९।

एकं विभावं समुपैति जीवः
स्वाकारजन्मान्तरतत्परं यत् ।
विश्वं हि तस्मात् परिवर्धमानं
स्वभावमार्गात् सचलं रहस्यम् ।३०।

क्षणे क्षणे मानसमिश्रिता या
वनस्थिता श्रीः समनीतिदासी ।
चिरत्नभाष्येण विकारिकेव
विस्तारयामास विवर्तभावम् ।३१।

गुञ्जन्निकुञ्जः सुहरिन् मयूरः
पूर्वादलैश्चुम्बनरंगकेलिम् ।
ग्रीवाभिचन्दैः कृकलासछन्दै-
र्विधीयते तैर्नहि संगभङ्गः ।३२।

सुमाञ्चलं वायुचलारविन्दं
दृगञ्चलं स्तम्भयितुं मृगाणाम् ।
अनङ्गसंगैरलिपुञ्जसिञ्जै-
रङ्गावरोधं कृतवल्लतायाम् ।३३।

गतिः समस्ता न मता तनोः सा
सद्वायुनायुष्करणेन तेन ।
संरुद्धपूर्वार्धसमस्थलेन
तयोर्मनोधिर्विकृतिं जगाम ।३४।

आकालचालैर्मधुमास एति
सविस्मयं बन्धुबलाद्बलीयः ।
वनावनौ तौ व्रततेः समक्षम्
कृष्णं सुधीरः समुदाय वाचम् ।३५।

पञ्चाननस्यानमतो दरीषु
सर्वं सुभद्रं भ्रियते तितिक्षैः ।
नगे स्थितो द्रुर्ददते द्युगामी
प्रभावभानं बलिते वसन्ते ।३६।

बाला: दिवा मातरमाह्वयन्ति
काकस्य शालेश्चयनं विधातुम् ।
स्वयं न भुक्ता: स्थितसंशयास्ते
मातु: कृपेच्छानुचरो हि बाल: ।३७।

तुंगा: पतंगा: कुसुमं मुषन्त:
रथाधिरुढा: पवमानवेगै: ।
सुराड्समास्ते शतभारतेषु
वहन्ति शोभामुपजातयस्ते ।३८।

सेवाव्रतं दु:खगृहं विबोध्यं
मात्रा शिशूनां क्रियते निकामम् ।
पूज्या सुमालेव जयाभिलाषै:
समाजनीति: परमोपकर्त्री ।३९।

निम्ब: निवासेन विहंगमानां
शाखाप्रदानेन कृतोपकार: ।
देवत्वमेत्यौपयिकांशुकेन
निगूढकार्याणि परार्थहेतो: ।४०।

कमामनन्तीव विमानिनस्ते
सून्त: ससत्वा: रहसि स्फुरन्त: ।
सांस्थानिकं पर्यटनं समर्प्य
रात्रौ विलीना: मृगयातिमाया ।४१।

अरण्यसत्त्वैरभिभूयमाना
नवागताः पक्षिगणा गृहेभ्यः ।
ते यान्ति भूमौ प्रतिबन्धिकायां
विलक्षणं ज्ञातमनिश्चितं नो ।४२।

विशुद्धिभाजानि न शंकितानि
महोदयानां हृदयानि यत्र ।
विलासभूमिः सुसुरासुराणा-
मनन्यशक्तिः समताऽनुशिष्टिः ।४३।

धर्मेशकीर्तिः विदितान्यबुद्धिः
परार्थंकर्त्री विनयादरेण ।
समाजबन्ध समयानुरुपं
विचिन्तयन्ती सभयं समेति ।४४।

बाह्यान्तरीयाः प्रकृतिः सुमाता
तयैव योग लभते मनुष्यः ।
भूलोकलोकोऽर्थितलब्धमुक्तः
सर्वैः प्रकृष्टं भवनं भुनक्ति ।४५।

संसारसारं परिणाममरम्यं
धन्याः लभन्ते मनुजे शरीरे ।
रुक्षं व्रतं धारयते नृसिंहैः
शैले वसद्भिर्नमितैः सवेदैः ।४६।

अभ्यासमालम्ब्य तपः समृद्धाः
शुभान्विताःनिश्चितकारिणो ये ।
परम्पराजालभरे समाजे
गतव्रते ते समुदं भजन्ते ।४७।

प्रयत्नसाध्यो विनिपातमोक्ष--
स्तेनैव कर्त्तव्यकरः सुमान्यः ।
जहाति कः स्वाभरणाय वन्दी
कर्त्तव्यवान् संकुरुते सुखेन ।४८।

समानकान्त्युत्थविशेषभासाः
मनोभवाः दृष्टिपथं गतः किम् ।
संभिन्नमार्गं मनसोऽपतत् यद्
गतं प्रमाणं विषयाभिभूतम् ।४९।

पुष्पञ्च पुष्पस्य जीवेशजन्म
भूलोककान्ति प्रविलंघ्य भाति ।
भवप्रभावो न पुरन्ध्रिगर्ह्यः
चित्रीयते चिद्रमणाधिराज्यम् ।५०।

संतापनेनामितमर्दितानां
सुखानुभूतिः प्रकृतौ शरण्या ।
मेधाविनां मेदुरिता ललामा
शोभायमाना प्रकृतिः सदेयम् ।५१।

निरुद्धरागात्मकभेदकाः ये
तेषां हृदि स्थापितदुःखजालम् ।
मृत्युंगतास्ते न समाश्रियन्ते
माता समानां प्रकृतिं पवित्राम् ।५२।

कविः स्वकाव्य प्रकृतिं निधाय
प्रकामहृद्यैः गुफतीतरेभ्यः ।
लोकस्य दुष्कारणतामवाप्य
[illegible] सुधारम् ।५३।

भद्रैरनुज्ञातमिदं रहस्यम्
केनापि देवेन विलासितेयम् ।
जगद्धराधर्मधृताध्वरेण
निसृष्टदेशात् समयान्न मन्ये ।५४।

प्रमातिरिक्तं प्रमदानुकारं
वन्योत्सवं दैवमनंगजन्यम् ।
हरेर्विधानं शकलीविधातुम्
गुह्या समायाति स्वान्तरस्था ।५५।

प्रतारितौ वन्द्यवनेऽसहायौ
सामर्थ्यसंजातगती च केन ।
प्रदीप्ततेजो दहने प्रसंगे
पतंगमाः स्वान् विवशे ज्वलन्ति ।५६।

शान्तासु सत्त्वाभिभवासु वेगै-
र्नगांगनासु स्मृतिरेति सद्यः ।
समाप्तबाल्योचितचञ्चलाना-
मज्ञावलीनां महिमानमाद्यम् ।५७।

गुरोर्गिरः प्राप्य वशी तदन्यं
न कांङ्क्षते मे सुमनो महीयस् ।
स्वैरं न चित्तं सुविरामेति
वाक्चित्रमात्रेण समीहितं नः ।५८।

यदा स्मृतिर्वाधयितुं सनाथा
मनोधिहेतुश्च न वक्तुकामा ।
ज्ञानाय सर्वाणि पराश्रितानि
सव्यानि जातानि तपन्ति के न ।५९।

पिता तु चिन्तामतिथिं विधाय
स्वान्ते कदाचित्त्वरिताद्धिरामन् ।
आप्नोति मिथ्यानयनांशवारि
माणिक्यमाता समयाऽमयेषु ।६०।

श्रुत्वा सुवार्त्तं विमनास्तमोभिः
प्ररोदयन्ती बहुलं विमोहात् ।
माता विमाने विमुखं विगण्य
मामेव, कां नो समतां विभज्य ।६१।

आधारमेकं परित्यज्य भुग्नः
भृत्यार्जनं धारयते पुलाकम् ।
इतीव मत्त्वा परिवेपते मे
मनोऽधिकं शान्ततमे कदम्बे ।६२।

मासे नवे क्षोभविकारसिक्ता
नवं फलं गन्धकरं समीक्ष्य ।
दृढां धृतिं सानुदिनं करोतु
विचारभेदो हृदयं भनक्ति ।६३।

तवास्मि मातर्न तथा वृत्तित्वात्
कामास्त्वदन्याः परिरक्षयन्तु ।
तंकानुभूतिं विदधे कदर्यां
त्वं वत्सले ! मां परिशीलनाय ।६४।

कृतं यदाचारमयं न लौके
मया, त्वयाहं परिवर्धितोऽस्मि ।
विनाविनां याति महानुभूतिः
नास्ति स्थितिः सार्धमकारमातम् ।६५।

दृष्ट्वा वरार्थार्थिजनं समस्तं
त्रस्तीति बाहुं स्वमपत्यलुब्धा।
असह्यदिक्कालमनन्तभूतम्
मुग्धिव्यनारी सहते समस्तम् ॥६६॥

मह्यं मृषा मामकमातृहीनं
गृहे वने वा सुखवेदनासु।
गेहं गतार्थः गुरवे निवेद्य
नैमित्तिकोक्तं फलमाकरोमि ॥६७॥

ननोतु मोहं न कथं स्थली सा
धूपायितो यत्र मयाहि देहः।
गार्ग्यंकसंस्थापितक्षिव्यरूपः
सद्योऽस्मि शुष्कायितमानसोऽहम् ॥६८॥

विद्या न साध्या सुखमेव सत्यं
न दोषवीजं खलु हृद्विचारे।
गुरुर्यदा सर्वगुणान् ददाति
प्ररोहमात्रं सुखचिन्तको नः ॥६९॥

सञ्जीवनं सर्वजगत् प्रधानं
पुरातनं सत्यमहं न जाने।
वेदान्तगेभ्योऽपि कथावसाने
सद्दर्शनं दुर्लभरक्षताकम् ॥७०॥

सामान्यधर्मेषु प्रधानभागी
सवासमुक्ता नहि काप्यनुक्तिः।
संतर्पितः सेवकवर्गतापी
महोदयानां हृदयापवर्गः ॥७१॥

संदोहमालम्ब्य दयोदयस्य
दीनानुभावं वितरन् समक्षम् ।
नाटाश्रितं वाद्यविचरणाया–
महोहि भोऽधन्यविधिर्विधातुः ।७२।

किं योगमासाद्य नरास्खलन्ति
तिरोहितः सद्सदुपायने किम् ।
जनार्थित किं न मनोर्थितं किं
तन्वे हि दुःखं वरणाद्विहीनम् ।७३।

सामोदमोदो न विभाति माने
भिन्नास्थया संप्रतिमार्गभेदे ।
वक्रो विधिः किं परिकल्पनाय
शिवानने नास्तिसमस्तरूपः ।७४।

मदर्थचिन्ताचरणे सुलग्ना
किं साधना नाम चिनोति तुष्टाः ।
यं वाञ्छयाप्नोति न संमिमीते
स्मृतिं शिशोः कालसमीक्षणाय ।७५।

कृतज्ञते ! त्वं क्व गतिं करोषि
लोकाश्रितानां परिहर्तुकामा ।
विनात्वदीयां फलमाकरोमि
संसारभावो न विकासमूलम् ।७६।

किं यत्नमाप्तुं परिवीक्ष्यसे त्वं
केनापकारो विहितोऽन्तकेन ।
अकिञ्चनः यो निहितापराधः

तवानुकम्पामधिगम्य लोके
यशःस्तृतं सेवति मानवोऽयम् ।
विहाय भूतिं भवदीयजातां
किञ्चिदपीशत्वमभिप्रयाति ।७८।

कृतघ्नते ! त्वां परमात्मनोऽहं
शुभोपहारं परिणामरम्यम् ।
पूर्वास्पदं कर्मफलं विचिन्वन्
प्राप्तोऽस्मि कल्याणविहारशीलः ।७९।

आलिङ्ग्य त्वां जीवनमानुलोम्यं
काञ्चिन्न त्वामेव सखे ! स्मरामि ।
दुःखे सुखे वा समतां वृणुस्व
साधारधारा भवभामिनी मे ।८०।

मार्गं सरन्तौ सुखसंगमेताः
अनर्गलाः संरुरुधुः सुमार्गम् ।
विरोधमागत्य तपोधनैस्तैः
तपोभिरुग्रैः गुरुभिर्महेन्द्राः ।८१।

दिवौकसः संनिहितानुबन्धाः
विचार्य योगैः प्रहसन्तमाशु ।
अरक्षितं देवपदं सुयत्नै-
र्व्यस्ताः क्षणे मार्गविबाधहेतोः ।८२।

क्वकोमलाविष्कृतरम्यशोभौ
रुद्रान्धकाः हिंस्रसहस्रसंख्याः ।
उभौ समागत्य सहैवभातो
नेद्य न जानाति कथं किमेतत् ।८३।

यथा जनौघाः विषये विवर्ताः
स्वकां हितैषां न निमन्त्रयन्ति ।
तथा पराः बन्धुतया सुदेवाः
सौम्ये समाहर्तुमनाः यतन्ते ।८४।

यशोमदः किं हृदयं भनक्ति
लोके यमासाद्य तितिक्षतीह ।
न कश्चिदादानकृतिं बिभर्ति
नृशंसभीतिः परितापरीतिः ।८५।

ईर्ष्यैधते वैरतनूततं तद्-
युद्धानि जायन्त इहासमृद्धौ ।
इति देवपादाः सुखमामनन्ति
प्रहार्य रुग्णान् कलहाभिभूतान् ।८६।

क्षुद्रात्मभावः मनसि स्थितो यो
महाजनस्तेन वशाभिसिक्तः ।
त्यक्तस्वभावः दमनं प्रपाद्य
रहस्यमेतत् चलचेतनस्य ।८७।

सच्छिष्यवर्गाः सदयाः चरन्ति
मात्रा प्रतीतिः सुगमा शुभंयुः
सतोऽभिलाषानुमतो निबन्धः
रत्नानुविद्धं शमदं सुवर्णम् ।८८।

समितु समादाय ननन्दुस्तौ
लब्धुं कुकालेऽपि सहर्षभव्यम् ।
सामर्थ्यसंपादितकर्मनूनम्
विपन्नकालेऽपि ददाति तोषम् ।८९।

परस्परं तौ हृदयं मिलन्तौ
कुकाल्यमासाद्य परीक्षणस्य ।
वर्षागतौ सार्थकतां चकर्तु—
र्गतिर्हि क्षोभ्या निजशोधशीला ।९०।

इत्थं शरण्यस्य सुधायमानम्
संप्रेरितौ तद्वचनान्युपास्य ।
आशातिवृत्ती मुनिवाचिकायाम्
निराश्य बुद्ध्या भययुक्तियानम् ।९१।

तस्याशयेनैव कृतेंगितस्य
व्यालोलमालोक्य तमोऽभिरङ्गौ ।
आकालरात्रौ चलितुं सचेष्टौ
कुशासने वारि प्रशोषयन्तौ ।९२।

कुपीटयोर्नि निकषोपविष्टौ
बाधा प्रदरीकृतमर्मभेदौ ।
शुचिं समाश्रित्य कृतौ सुसंख्याम्
विपन्नवेला विजय परीक्षा ।९३।

प्रसूतिदूनाद्धि निरन्तरञ्च
सूतेऽर्थसिद्धि मुनयेऽनुवृत्तौ ।
मृत्योर्गतेग्रासवृत प्रदाहं
कामाग्निरेवास्ति विवर्तनाग्निः ।९४।

वह्निं समादाय विकेशकायौ
वनेश्वरः सो. वनजः सङ्कोच्यः
हृदा समालिम्य मतान्धकारे
तत्याप खेदेन सुक्षिप्यमानौ ।९५।

संयोजनार्थं समिधाव्यवस्था-
मवां व्रजावो शरभव्यवाये ।
क्षिप्रं क्षतिश्चक्रमिवागतिः सा
कार्यं निवार्यं नहि कार्यमेव ।९६।

प्रभासमाणाऽवसरे समुह्य
प्रभासिता पूर्णकथा सगोप्या ।
श्रुत्वा मुनिस्तत् कथितां मुमोह
पादौ निपीड्य सुखमाप तेन ।९७।

न योग्यभावो नहि वाग्विलास-
स्तथापि विश्वासततिं सिनोति ।
मातावयोः कांचिदपत्यरुपाम्
सर्वत्र सर्वस्य सुरक्षितारः ।९८।

क्षणं सचेतः क्षणिकेन जाड्यम्
मुहुः सुसुप्तिः क्रमशः समेताः ।
कृष्णः सुदामा सुतनू सनाभी
साह्यो गुणः संक्रमणं वितेने ।९९।

अतीतयोगाऽनलुप्तगर्ह्य
समाधिमग्नाः सलिलार्द्रदेहाः ।
क्षेमे क्षणेनाप्तमनाः महान्तः
यथाऽक्षयत्वं सत् परिवर्तनीये ।१००।

महाप्रकाण्डोद्यतकाकपंक्तिः
पलायते विघ्नमपाविधातुम् ।

परस्परं बाध्यदशांगतोऽपि
शुभोपकण्ठं न विचारणीयम् ।१०१।

वलाहकः स्वच्छकलं विहाय
कृष्णत्वमाभासतयाऽनुयत्ता ।
संपूर्णमासाद्य भूमेर्विभाग-
मभीप्सित केन समार्जितं स्वम् ।१०२।

का त्वं कुमारी कमलाकराऽसि ?
विश्वं यया दुःखशतानि भुङ्क्ते ।
धन्याः कथं नो भवतीकुलांशाः
हा स्थानमाक्राम न किञ्चिदंशम् ।१०३।

वाग्वाधिका वाच्यमहोत्सवेऽपि
नीराजनं ते घटितुं सशक्ता ।
इत्यस्मदीया स्तुतिपद्धतिः सा
प्रसेदुषां त्वां विधिनोत्करोति ।१०४।

संमोहिनी वमपथः वधूटी
सन्मानवानां हृदयं जयित्री ।
विकारिलोकोऽर्थयतेऽत्र युष्मा-
नहो ! प्रभावः प्रभुपादधूलेः ।१०५।

साहित्यवत्त्वामतिभावयुक्ता
हित्वा प्रसीदन्ति सुखं सहेलम् ।
एकान्तवासेन वयः प्रमाणं
वक्ष्यन्ति माध्यं नहमानमध्यम् ।१०६।

सौंदर्यरक्षाकरणं नियुक्ता
किं भागधेयं भवतीगतं नु ।
यद्वाञ्छति प्राज्ञजनोऽपि नित्यं
तत्हस्तसिद्धं सुधिया भवत्याः ।१०७।

त्वां प्राप्य बाला सुमनोविहारं
याता जगत्यां वसुधारिणीव ।
मूल्य प्रधानं तदपि स्थली सा
कार्यं समाप्तं भवतीकृपायाः ।१०८।

या त्वां विहायान्यगतिं वृणोति
तस्याः व्रतित्वं प्रथमे विनष्टम् ।
अतर्कितान्तर्गतभावनायै
भद्रे प्रणामं शिरसा सरागम् ।१०९।

विभिन्नधर्मस्य सहैव वासः
प्रत्येकशास्त्रेषु हरेः प्रभावः ।
अनेकसाधुः परमोपकारी
वृत्तेर्विधानं समयानुसारम् ।११०।

कामः प्रधान यदि सज्जनेषु
न बाधयेद् भोजनभाजनेच्छा ।
तेषां न साध्यं जगतो फलं तत्
यतः परोक्षं यशसश्चिकीर्षा ।१११।

दयालुना विज्ञजनेन पूर्वं
पञ्चाचचर्…ि कार्यमितीव भेदः ।

एषा समस्याखिलशास्त्रविद्भ्यः
स्वभावमात्रं शरण त तर्कः ।११२।

आध्यात्मजाता परमार्थिकेच्छा
संस्थापिता मेदिनीमोदनेषु ।
तच्चालकानां हृदयोद्गतानां
शुभाशुभौ मानसमिश्रितौ स्तः ।११३।

प्रमोदवीजैः कृतकोपकारि
शुभावहः निर्णयितुं प्रपेदे ।
श्रेयः मुनीते न नियन्तृयत्नैः
विरोधनीतिः निभृता गरिष्ठा ।११४।

मिथ्योपकल्पी विषयानुरक्तः
भूत्वा विधर्मी नयमार्गहीनः ।
स्वधर्मभीरुः वलनिर्भरेण
निःश्रेयसः दूरतरं प्रयाति ।११५।

स्वाभाविकं वार्धक्यमाधुनोति
मनोऽनुकूलं विपदः सुखस्य ।
तदन्तकारी जयतीह तथ्यं
शुभाय रोगः जलवाहकस्य ।११६।

परेतराजः किमु मानवानां
धृतान्वयो घोरवनेऽतिशेते ।
समीरणः शापमपाविधातुं
[illegible] ।११७।

विशेषतेयं पशुना समस्ता
बिभेति ना दूषकदोषदोलात्
विचारणायां गतिरागतिश्च
भेदं व्यनक्ति स्फुटतीव लोके ।११८।

जल सुखे यत् प्रवहायमाणं
दुःखे तदन्यं समयान्तरोऽयम् ।
तथैव झझावसरं विहाय
परं जलं वर्षति तापनाय ।११६।

शान्तानिलात् स्पष्टतरं तमस्तद्
दिगंगनांगावरणं विभाति ।
संतानविच्छेदमवापितं किं
मनोऽनुकूलेऽपि विपर्ययेऽस्मिन् ।१२०।

सन्ध्यानमद्रात्रिजनिः सरागैः
पुत्रोत्सवे वाद्यकरीव रस्या ।
राज्ञः पुरी सा प्रतिभाति तेन
किं वा मनोराज्यमयी विभूतिः ।१२१।

दिनान्तरे सा श्रमितस्य माता
मनोरथं दूरयते जनानाम् ।
तया विना सो हृदयाभिलाषः
सुयौवनश्रीर्विधवासु नष्टः ।१२२।

मोक्षस्य किं रूपमहं न जाने
मृत्युः सुसुप्तिः युगलौ न चैकः ।

एको दिनस्यामरणं तथैकः
परो विपुण्याय परिष्क्रियायाम् ।१२३।
विलयपरिसमाप्तौ सर्वतो नन्दनीया
समधिकजनता दैन्ये विरामं युनक्ति ।
इयमधिकविकारा मानसी प्रोद्भवा या
सुकटदपरिमेयवर्णने संप्रवृत्ती ।१२४।
सांसारिकं सौम्यवयुः सुदामा
विस्मारितः काललवापितेन ।
धृतावतारो युगपद्विधाता
स्वरुपमेतीव पलान्तरेषु ।१२५।

इतीन्द्रविरचिते सुदामचरिते समिदाहरणनामा
द्वितीयः सर्गः समाप्तः ।।२।।

# ॥ तृतीयः सर्गः ॥

हंसानां नादाधारैः सा विद्युन्मालाऽयाति स्वैरम्
वर्षाधाराः नित्यं संधाः धन्याः लोकाः पश्यन्तिस्वम् ।१।

चित्रपदा हरते सा मानसरोवरवासम् ।
वर्षणकालसदाप्तौ लोकजनान् प्रतिरागम् ।२।

संधातुं मानसभाव लोकाः विस्फुरणनेत्राः ।
आलंकं गुहयति स्वं श्रुत्वा हंसरुतं तम् ।३।

नाराचिका मंदार्यकि कामस्य हस्तगामिनी ।
लोके प्रसिद्धभावना नायाति कस्य मानसे ।४।

प्रमाणिका मदालसा जनेषु भाति नित्यशः ।
ममेति लोकभावना विचारणे नु कम्पिता ।५।

देवदयो माणवकः केन प्रकारेणरतः ।
द्वैतनराणां विधिना वारणहेतोर्हरते ।६।

अपरतो गजगतिः सलिलमार्गसरणे ।
परिभवेन सुमदा द्रुततरं भवति किम् ।७।

जीवनं विधौ करेण निर्मितं नु खेलनाय ।
देवता समानिकाऽपि नालमेति वर्तनाय ।८।

कालिन्दी सेवाया औचित्यं लब्धं तेषां कुत्रागारः
सेवन्ते भावैस्ते संपदं रूपामालीं भद्रां संसारे ।९।

भुजगशुशिभृता धात्री दिशि जगति जाते किम् ।
स्वगतविचरणे लीना धरणिरियमसंबाधा ।१०।

सहसा भुजंगसंगता विरहाकुला विहंगमा
स्वयमो विरामंमेति किं मरणं वरं विज्ञापितम् ।११।

भद्रिका भजति सारदा नास्ति काचिदपि कामना ।
भावनामयकृतौ धृतिः क्षेत्रपा वसति भावुकी ।१२।
यच्मर्णिमध्ये स्फूर्जतितद् विस्मरणं नो याति सदा ।
लोकमतं तथ्यं विधिना संदधते प्रत्यक्षभवम् ।१३।
भेदवरहितशिवदा भाति विमलमतिमती ।
किन्तु विरमति हलमुखी दानकरणविभवदा ।१४।
अनवरतविकसिता विमलसुमसिकमला ।
शरदवगमनलता भवनिखिलकरगता ।१५।
घंर्यारिणा सतमसा मार्गः पूर्णस्तटाघातभयाधारः ।
जाताभ्रशोभोजयते देवः शब्दप्रकर्षेण घनोदेशः ।१६।
कष्ट जीवनशरण्ये जाता
प्रीतिः मानवपरिणामा सा
वर्षाकालगतविभेदे नो
शोभाभा कुवलयमाला नष्टा ।१७।
लेखायिते चित्रलेपनार्थं कैश्चित् प्रवृत्तौ विचित्रकारैः ।
येनासिते तत्पटले विभाति सवर्णरूपं सितं न चित्रम् ।१८।
कष्टदा मयूरसारिणी मे
स्वातिमेघबुद्धिधारिणी सा ।
वर्षणेऽधिके विरागभावा
तोषकारिनामकसुदक्षा ।१९।
काननजाग्नि शामयितुं तत् कारणरूपं विश्वजनीनम् ।
चातकदवं रुकमवतीव नीरदनामास्याति परोक्षात् ।२०।

मोहोन्मत्तः खलसमुदायो भ्रान्तावर्त्ते भ्रमयति घोरम् ।
विद्वद्बुद्धि र्जितकलगीता साकारुप्यं जनयति दान्तम् ।२१।

पुष्पगता रंगैःमार्जिता
षड्पदपीता धूलिधूसरा ।
दीपकमालेवात्र शोभिता
वायुविलीना रुग्णसेविका ।२२।

दशति छिद्रवासतक्षको न दयते जीवनाय वञ्चित ।
सुकृतिसेवको मनोरमां महति हारदानतत्परः ।२३।

नाज्ञाते क्रमितधनागमा
नेपथ्ये भ्रमिता नटांगना ।
गेहाद् निर्गतभावतोऽधुना
लोके शुद्धविराड्यं मतः ।२४।

कृष्टदजीवस्य ददर्शतुर्मानसयोगात् करुणागता ।
काव्यज हेतुः प्रतिपादितः काव्यांगणे नृत्यसमं सृतम ।२५।

आचारशीलः सुनृपाज्ञया श्रेयस्यनुज्ञामतिमूल्यजा ।
पाल्या वयस्याः सुधिया दिशो वैकालमासाद्य चलावनौ ।२६।

शब्दो घनतः समुपस्थितः
दिग्छादनतां विदधाति किम् ।
सर्वे ससमीरविधाततः
कुर्वन्ति पलायनदैवतम् ।२७।

नंगमस्वलोके मनसिजः विचरतिसंगैः परगृहः ।
रचयति वीर तरुणी जयति मनो[illegible] ।२८।

धर्मभावे परमगहना
दूरं जाता मनसः शोभा ।
हंसीवास्ते पलकविघातात्
पूर्णाघातैर्भयदहनैश्च ।२९।

समिति प्रलापजनिमहो शिशवः युता सह रमणे ।
विहरन्ति ते परिवशिता कुसुमशरो लघुशरणम् ।३०।
इतिह समे कति जनमनस्त्वरितगतो किमु नियमतः ।
चतुरचले जनसदसि सघनवनेऽपि विकुरुते ।३१।

विपिनचलितवायुवेगैर्नु
कुपुरुषजनिता मदार्थभा ।
विभवविगतभावनाभारै-
र्निपतितसरसा बिभातीयम् ।३२।

प्रणयगतिचलदपावृत्ता
स्वमुखमदगतभवाब्धौ ये
रुदनपरिमितिदधानास्ते
गणयितुमभिलषन्ते नो ।३३।

शिखण्डवलयं भावैः प्रभावैः
विलोकितमतो किं शान्तसारम् ।
विरम्य समये देहाभिमानी
करोति सदयं किञ्चिन्न कार्यम् ।३४।

साश्चर्याः संप्लाविताः क्रोध संघैः
धुन्वन्तः प्लवगमाः शालिनश्च ।

भूमे रौद्रां क्रीडनाद्रांविधात्री
ज्ञात्वा सामर्थ्येन सूतां सुदैवैः ।३५।

सूमाञ्चलं भारतीयासमह्यं
सारं भुवं नारमन्ते मुदा ते ।
धन्यः मनोजो नयेनाभिमानी
निःसारतो सरतापादकारी ।३६ ।

वातोर्मियं शुभमेले महोजा
अम्भोधारा तरसा जीवनीयम् ।
श्रेष्ठं धन्यास्पदवासं विगण्य
धावन्त्यप्सरसः चञ्चलाः किम् ।३७।

साधोन्द्रवज्रं मदनेन साध्यं
प्रायुंक्तमाच्छोदनकानने नु ।
प्रायोऽधिगम्यें सुखहीनकाले
नायान्ति मार्गाणि रिपोर्गगस्य ।३८।

पलायमानाः सभयं सवत्साः
सुलक्षयन्ते प्रलयादिकाले ।
अवर्णनीयां गुहिनेऽवलोक्या-
मुपेन्द्रवज्रा ल्पवलानिरुक्तः ।३९।

शरद्विकाले कमलोपजातिं
नेदं विचार्यं भवतः सुबुध्द्या ।
ज्योत्स्नागमे तामसवर्तिनी का
विचक्षणे किं ककुभीत्वरार्थम् ।४०।

अनवसिता बाधा गुरुमत्ता
ललति सदा भैमी शुभभारा।
मदयति लोके वर्षणधाराः
किमधिकमर्थं मानसगानम् ।४१।

ललामभवनं सेवकजानां
प्रमोदकरणे पाटववत्तत् ।
विलोक्य मुहुरालस्यसुनेत्रः
उपस्थितमिदं रम्यतरं किम् ।४२।

दैवतपंक्तिमपास्य विभुत्वं
कर्त्तुमनर्हंजनाः परिहासे ।
दोधकवर्गसहाय्यगतास्ते
स्वाभिमतं प्रचरन्ति सदाराः ।४३।

स्वागतं सुकुरुते नतमूर्ध्ना
पूरितः स्वगतमेयमहिम्नैः ।
श्रेयसं मनसि धारयते सः
योगिनो फलमलं धृतशाराः ।४४।

शीलितशापं सदलसमाप्तं
दैवतदीप्तौ पदपरमार्थंन् ।
भावितहेतुं स्थगयति माने
काननदेवः परमनुकूलम् ।४५।

सरति शान्त भावैर्मुनेर्गणः
कटति देवता काममिन्दिरा ।
भरति मानसं मानवस्य नु
हरति दुःखभारं वियोगिनः ।४६।

सत्वरं सः कम्पनः यथेप्सितं
मानिनीमानेन शत्रुतांगतः ।
मित्रभावैर्नास्ति सर्वतोगतो
भावुकैर्नामृग्यते जनो वरः ।४७।

सांध्यराग·ोहितं विरेचितं
श्येन्युपरिस्थितंवनं विलोक्यते ।
जीवितावधौ नरो जितेन्द्रियः
सर्वतः करोति व्रत् जपो वरम् ।४८।

शेषभावमधिगन्तुमातुराः
जीवनाय समजे रथोद्धता ।
ध्वान्तकालपरिपालनार्थिताः
चारुता प्रवहणार्थतत्पराः ।४९।

मधुररसयुता सुभद्रिका
गुणनफलकलनपद्धतिः ।
सरभसमहसा सुशोभते
मदनकलितवाणविखण्डने ।५०।

अपकर्षणयोग्यतयाऽपिसः
कृमिवंशभवः समयान्वितः।
कुरुते मनसः प्रमदं बहु
उपचित्र समः सुतरां जले ।५१।

हस्तिसंघ एति घनतोद्धुता
प्रेरितां महेन्द्रभवनान्चितः ।

देशकालमीक्षितुमनीश्वरः
सेवकान्वितो विवलतेऽधिकम् ।५२।

कृतिस्वरूपं प्रकृतेः कथितं
विशारदः कालविधानकरे ।
भयानकं पक्षतटं मृदुजं
सुखाय दुःखाय समं विकृतौ ।५३।

स्तोत्रेण सुरालययानमिव
केऽरण्यवसाः कृतमोटनकाः ।
मध्ये कुटिरस्य नभश्चरणे
संज्ञालहरिं वितरन्ति बहु ।५४।

प्रमदवनेऽभिनवां सुमुखी
विरचितवती मदने भ्रमजा ।
इह समरौदशिवञ्च शिवा
कृतिरपरो नहि यच्छरणम् ।५५।

शनैः शनैः प्रकृतेर्विकसितैः
विभाति सा स्वरजा प्रकामतः ।
अहो सुगीतिभरी सुमानिनी
सुसभ्यता समता प्रदायिनी ।५६।

मुग्धाः हंसा भ्रमरविलसिताः
सर्वेशस्यावतरणहृदयाः
अयान्तास्ते सलिलधृतमिषाः
लोभो बाध्यं जगतिनु कुरुते ५७।

संकुरुते शैवजपरमार्थैः
सान्द्रपदं पुष्पपरगत च।
साधनसारै धृतबहुवेष—
मौधकरो धवति समभरेण ।५८।

स्वेदाधार्तः शाम्ताभावः कृष्णाचारी
सत्ये लीनो मानैर्मत्तः संहाराशः।
यदृक्षाभिर्विद्याधारौ नाराचैः सः
स्वान् संभावान् गच्छन् तूरंसंभाति स्म ।५९।

सासूयं या जलधरमाला शुभ्रा
आलोकं पश्यति नतगात्रा नव्या।
भव्याकारा विनयवशा जाता वाला
केलीकाले मदनवशा रात्रौ सा ।६०।

अमर्त्यलोकास्त्विदिवं समाप्यस्वं
कुर्वन्त्यहित्यं भूतले नाराणां ते
वाञ्छाप्रसंगेन प्रसादपुण्येनु
विनष्टतृष्णी न विजीयते विज्ञैः ।६१।

घनगमनपदो वायुः समाजे
वितरति दिशः सान्द्रान्धकारम्।
क्षणभरसुशान्तः संपुटोऽयं
दनुजनटनो दैस्यारिवर्षः ।६२।

नृत्यान्तभूर्विश्वदेवी चकास्ति
विद्युल्लेखाश्लिष्टा चारणचारुगानैः

देवानां कीर्ति गायति स्थायिभावैः
सत्यं संसारे साररूपं विभाति ।६३।

सुधर्नाभयैर्देवसभ्यैः सहर्षैः
भुजंगप्रयातं विधायानरेशम् ।
शचि स्वेदविन्दोर्विधाताय शक्रः
मुखस्पर्शने सिंचते सोमराजेः ।६४।

अनुगमनपथ वृथा जनास्ते
जलभरणसुकमं काममत्ता ।
वनजसुमनमालिकावनौ
वहन्ति सरसवायुरत्र मन्दः ।६५।

श्रद्धा सुमनं सूर्यायात्र प्रदाय
शोणा मणिमालेव स्थाने प्रतिभासा ।
ध्वान्ते समरागं या याति सदेहां
किं किं चरते नो दुःखे परिहासम् ।६६।

सरसि मनोहरकान्तिसहाय्य
विकसति तामरसं स्फुटशोभम् ।
नयति न कोऽपि जनः शुभतायै
परिगलकोषमयं किमु नष्टम् ।६७।

सुमनलतातुल प्रशमरङ्गम्
तरुवनरुग्णभवभरितं नु ।
पवनदलेन साभिसरणेऽत्र
शुभनवमालिकेव धवमाना ।६८।

पिहितघने शान्द्रतरलजालैः
शशिवदनेवजगतिप्रकाशम् ।
स्वगतविभावैः किरति सुधांशुः
कुसुमविचित्रं जयति सुरेशान् ।६६।

खगगणः समुदयशुभकान्तेः
सदयमिरयते चलितरशनभागः ।
पशुमनससुचंचलविचलनभंगः
कथमबनपथे द्रुतपदमभिलाषः ।७०।

विहरति बहुल वर्षाकालिकी
विरमति चतुरो देशे साङ्गकः ।
विजनललितबालः सेवाकरो
भरितसमयसंमानैः सेवते ।७१।

पथ्यरूपं विभाव्यावनौ शोभते
नीरसगै घनं धावतः शाखिनः ।
राजते शान्तिदा सा मृगी सादरं
सग्विणी भासते जालतो मानदा ।७२।

विपिनविलयभावमन्दाकिनी
प्रवहति मधुरं सदा राजिता ।
प्रणयकृतनदात्र चित्रांगणे
अपरसमबिभाविता लौकिका ।७३।

बलायमाणपञ्चचामरोऽवरः
स्वयं करोति खेदकारिणं मृषा ।

वने विचारभावनासुरंजितो
न काचिदत्र खेदमाप कल्पितम् ।७४।

प्रस्तौति दुःखं परतापकर्षकं
येनात्रलोको वसितुं न वाञ्छते ।
सौख्यस्य वस्तु न मनाक् सुराजितं
तच्चेन्द्रवंशे प्रतिकूलतांगतः ।७५।

प्रियंकरं कस्य जनस्य नैतिकं
न शोभते मानसभागराश्रितम् ।
सदानु वंशस्थविलं विधापितं
सुखानुभूत्यै च सनातनं पदम् ।७६।

नैकट्यकान्ता ममता मतार्थितं
इन्द्रेण वायुर्विदयो विराजितः ।
गेहाद् वहिर्यादहं प्रवेशितो
न ज्ञातभावीति विनिश्चया किम् ।७७।

भ्रमरसमा भ्रमरी समाकुला
इह परिचुम्बति मालतीं सदा ।
क्टति ऋतौ सदयं विहस्यते
नियतिशिष्टजनो समुदायते ।७८।

रम्या शुभाग्र ललिता संगरे
रोषाद् विहाय रमते सम्प्रति ।
भाग्येन सावसरगम्याऽप्सरा
संध्यायमानसमये ... ।७९।

भुवनधारणमना प्रियंवदा
कदनतो वनदिशः समागता ।
मननशीलजनता परस्परं
निजनिजे समयजे समैति सा ।८०।

अपरवस्तुविलोकनविस्मृतौ
द्रुतविलम्बितरम्यगतिर्जनः
करुणनृत्यपरायणमानसो
विरमते सफलाय स्तोत्सवम् ।८१।

गहनगमनकालपरायणौ
सततगुरुजनैर्विनयशिक्षितौ ।
स्वयमनवरताभ्यसने पटुः
मतिमधिसमज्य समुज्ज्वलाम् ।८२।

आपदि कार्यं संवदते ललना
गौरवभारं संयतदानभरा ।
निर्णयशान्तेः सेवनतत्परता
मानवमाने याति कदा वयसाम् ।८३।

त्रिदिवं प्रगतो गृहहा कृपणः
श्वसति त्रुटिकेन गतो विकृतिम् ।
विगतः प्रभवैर्बलवान् तपसि
हरिणा सुगतोऽस्ति सुशप्त इव ।८४।

प्रमितांक्षरैर्भणन्ति लोकगता
विदुषां वरेण्यगणा सुषमा ।

भवितव्यता प्रथितवेदभवा
न कदापि नाशयितुमाश्वसिता ।८५।

जलोद्धतगतिं विलोक्य वसुधां
सुधा समगतां बिधातुमलसः ।
खगः तरुगतः सुखानुभवने
स्वयं सदयया ददाति प्रणयम् ।८६।

वाधते पथि समग्रसलिलजं
चन्द्रवर्त्मसंतद्विपलितम् ।
कुत्र गन्तुमनसः पथिकगणाः
मार्गमाध्यमवलम्बनचरणाः ।८७।

सेवार्थकान्ता सा समाजेय-
सर्वेन्द्रबायुर्विदाबाग्निरूपो नु ।
दु खान्नतिः सर्वतारांकितेनैव
सारंगकान् तान् जलाप्लावितान् ।८८।

कथा सा समुदेति विताड़नजात-
हृदा जवतो परमौक्तिकदाम ।
विभाति नु विद्युदभेदनकारि-
विरोधभवं मनसा हरतीव ।८९।

खेदविधातसहो परमानस-
मोटकदानपरो जनताकर ।
लज्जयति स्म विरोधविधायिन-
रिक्तविभावमधीरतयापि सः ।९०।

परिणतिमनुसरति मनुज-
मनसि विगततरलनयन ।
त्वमनवरतविधवनपर-
मधुरविकसितसुमनगण ।६१।

ताम्बूलपानं सभयं वितीर्ण तूरं
लौल्यस्त्रियः रक्तमयोष्ठवत्यो दिश्याः ।
वसन्तपर्वं किमु वृद्धवर्गो धीरः
मदोद्धतः राष्ट्रछटामनक्ति स्थाने ।६२।

सिसृक्षया किमु सखे ! भवमग्नाना-
मातृप्तिः सदेयं विभातीश्वराधारे ।
स्थलं यज्जलात् कंदुकं खेलनायैव-
स्थितिः प्राणहर्त्री भवित्री वयस्यास्ते ।६३।

विमानैः संमानैः चंचरीकावलीं सा
विधातुः सोत्साहा सर्गसंभारयुक्ता ।
बभौ पुष्पस्यास्तित्वे शुभागार मध्ये
प्रयातः संयातः सौरभे भासमाना ।६४।

सरसकिरणं दीप्यते चन्द्ररेखा
विगतरमणा सहरेत् कार्यभारम् ।
सुरतरमणी सा सदा सेवमाना
चरति विरहे भावनांयामुतायाः ।९५ ।

विकटमृगेन्द्रमुखं भयानुकूलं

तदपि गजः सह गच्छति स्वभावैः ।

विपिनविहारकरं सुधाकुलं तं
सुखरहिते कृपते महाजनः किम् ।९६।

वैदग्ध्यं प्रकटयते नु प्रहर्षिणीयं
या सौम्या रमणवशा शुभसारदा ।
वर्षाकालसरसदानपरा तरसा
फुल्ला सा सुमन वधूः रमणाय सद्यः ।९७।

भासन्ते शाले सरसा मत्तमयूराः
वर्षन्ते नैजा प्रभुतां दैवतगर्तें ।
द्रर्शं दर्शं लोकगतानां दशयास्थां
नृत्यन्तो सभावमयैः सा नयदानैः ।९८।

व्रजमागताय दरते कलहंसः
भयभीतमानसभरोऽपि सदारः ।
सदयं विलोकयति सारसपंक्ति–
जलज विहाय सरसं शुभदायी ।९९।

जयति तनुविलसने सुमचण्डी
स्वकमलनयनैर्भाग्यसुदायः ।
पिहितशुभगतिवरा वरदा सा
नमितजनसमरजा वरदाना ।१००।

उपस्थितमिदं दुःखं विपिनमध्ये
विभाभरितमार्गें लोकविहरणेन ।
न शोभनमयी सेवासमयगतायाः
विदाहमलेश संभावये न मानस ।१०१।

अधरगतसुधां तां विहायात्र यत्र
विहरन्ति सरसा सानया चन्द्रिकाः ।
संहृदयसुषमाधारणे तत्परा
कुसुमविकसने पाटवैर्निर्मिता ।१०२।

विमानिनी भद्रवतीं विमुग्धा रता
मेघस्य नेत्रांभसि नो दया शेरते ।
दयालुतो मानवजातिरग्रा मता
किमद्भुता ज्ञानजनिः रहस्यं वरम् ।१०३।

सुमन कुमारललितं महाशयं
नियतं विकासयति मञ्जुभाषिणी ।
तदपि स्थितिः शुभफलाय नोपगता
ज्वरति स्वभावपरिणामवाहिनी ।१०४।

विचिन्वतोः भावविधिशास्त्रसंबलं
पुनः स्वविद्याग्रहणमाभिलाषितम् ।
प्रवृत्तिवर्गऽवितथंयशः संहित
तदेव कृष्णाशुभदमञ्जुहासिनीम् ।१०५।

भवने सृताः प्रमुदिताः कुतूहलैः
विपिनस्य दुःखमतिशायिगत तत् ।
जनताहृदः शुभमदैः प्रबोधिताऽ-
पि न जानते च करणीयकथां नवाम् १०६।

संभासते विभवगता प्रभावती
सोमस्थितां किरणमयी विभावरी ।

सौंदर्यतः च्युतसुमनाकितं सुमं
समेत्य सञ्चरति धवे गतः खगः ।१०७।

व्यनक्तिभावसमुदयं सदा रस
सुमायमाणतरुगणः सदारसः ।
विभावरी विकिरति चारूचारणं
विभाति सर्वदैव शुभरुचिरापरिष्ठितिः ।१०८।

लेखां विरच्यायनमापयन्तितरं
क्षुप्रा समासाद्य फलस्य भागमरम् ।
वायु सुमन्दोऽक्षरदाशु सर्पकरः
दिवाति शीघ्राय फणायतानुमतः ।१०९।

छदाः विचाले शिथिलीभवन्ति पदे
रवेस्कराश्चारुतराः प्रकाशभराः ।
दीपेऽस्तमाप्नोति पतंगवर्गवरः
शान्तिविधातुं ननु हर्षसंघवरः ।११०।

आचरणे पटुतां नृपनीतिसमं
कालगतं कुरुते गुरुभावभरम् ।
मोहयते सुधिया शतदेशधरः
नेतृगणो मनसा सकलार्थकरः ।१११।

व्रासन्तीयं मे व्रजललनाभिः संलापे
लीलाधारे सानतमनसो सतप्तेषा ।
श्री साभूयात् दूरभवनतो नाज्ञाता किं
लोको दृष्ट्वा नत्यति हृदयेशल्यं तुल्यम् ।११२।

स्त्री: सा बाधेयांव्यथितपरमसंबाधा
भूयो भीतेर्दूरदिशि जगति जाते किम् ।
जीवा: क्षुब्धास्ते स्वगतविचरणे लीना
जाताऽस्माकं किं धरगिरियमसंबाधा ।११३।

व्यधितखगसहाय्य: सनाथाय सद्य:
मदनपरवशोय: परेश: सुवायु: ।
जवपरिमदमत्तोऽधुना सन्निपात्य:
प्रथमकृत कथा वैस्तु नान्दीमुखं तत् ।११४।

प्रसूनजालातुलरंजितानां तरुणां
विभागरुग्णा: ससमीरनीरै: सकीरै: ।
फलायमाना: छदपूरिता: सेवमाना:
विधूय वासांस्यवलाजनानां विभानाम् ।११५।

देशानां शासनविमलनो मेधमाला-
यादुर्धर्षेण विविधपरार्थैं बिलीन: ।
धारापातैस्तुदति शरभेव स्मरिष्ये
दुर्लभ्याम् विप्रसुजनगणान् सुस्थवीरान् ।११६।

प्रत्यर्थं तयोस्तदापत्सु करिष्यमाणं
प्रारब्धं गुरुतरं कार्यमुपस्थित यत ।
साविष्कारनिर्णय: शान्तहृदो: स्वयं स:
सदेग: समागतोऽन्तर्गतभावनाभि: ।११७।

पाश्चात्यवायुरनिशं विवहायमाण:
मन्दञ्चकार सकलान्नदयालुताभि: ।

तस्मिन् वसन्ततिलके सुखितं सशीतं
शीतायमानतनुरुक्तिमुवाच कृष्णः ।११८।

सिद्धिः कैर्नवयोगैः सद्योऽजायत लोके
मां किं सा नहि गम्या मित्रप्रेममणिलाभे ।
जाता सा मदलोला बाधामे प्रथमेयं
द्वैताद्वैतविरागो लब्धो भग्नजनेन ।११९।

अपचयगत जीवजातसहाय्यकैः
स्थितसदनजनो पराजितवैभवः
स्वगतधनसुधाप्रयाणसमुत्सुकः ।
अधिगतमकरोत् सुखायतभावजम् ।१२०।

व्यथयति बिनय प्रहरणकलिका
मधुररसधरा विहरणविपिना ।
शरणविरहितान् हृदयमधुमती
कुपितकवलनाय क्षुधितनयना ।१२१।

ध्वांतेकाले रागाधारे शोभा जाता सन्ध्यायाः
स्वान्ताध्याने शान्तेवास्तौ या रात्रौ सार्त्तामत्ता ।
रम्भायाः रम्भाकि शान्द्रैः चान्द्रैःसा जाता
कान्तापाशैः धाराजालैः सर्वत्रास्ते लौलाखेला ।१२२।

बायोःसमाघर्षणभूतघोरां शोभाधाराम् ।
नूनं प्रवाक् शापकरी सुघेति स्वादादर्शा ।
ज्ञात्वाशिरो भूमितलं विधायादित्यादेशम् ।
समर्पयामास रहःस्वदेहं प्रेयःप्रोतम् ।१२३।

केकारवाः वारणमद्यधारा निराधारा
पलायनं काकवकादियूथैः सरागैस्तैः ।
चित्कारसारैः समथानुपूर्वं विहारां तां
वृष्टिं चयन्तो भयमादधानाः सुमानांगाः १२४

वैकालिकः प्राप्तनिजाधिकारवितप्तः सः
मोहान्धकारेण प्रफुल्लदेहविदेहार्थम् ।
उत्थाप्य तच्छोकविलायितंतं विदेशेषु
वृद्धः परिज्ञाय दयार्थवाक्यंकथोपेतम ।१२५।

ह्रादिनी प्रपातगर्जिता जलौकषां सारा
प्रार्थितं धनं सुवर्णभागतं समाहारम् ।
गन्तुमातुरास्तडिदसुभारघोषणोद्गीतैः
पूर्णवारि चक्षुषः मुखेन गर्जिता सद्यः ।१२६

सुहृत् परित्यज्य मुखं प्रपूर्य शुभं वेषं।
तपोवने कांक्षसि भक्षणाय भरं देवम् ।
वशेऽसि दीपःशरजन्मसूनुभवः
न्यायैः परास्तो विधनं लभस्व तुरंगामी ।१२७।

आगस्कृतस्य स्तिमितस्य मायां सेवितायां
आदृत्य सस्त सहितावलम्बं माननीयम्
बुध्वाशितं पातकक्कालिमानवेपमानम्
तेन समासार्जितमार्जव चातुर्यधाम ।१२८।

हर्म्यं लीलालोला चित्रा सा न किं याति सारा
[illegible]
क्रीडायां संशक्ता [illegible]

पुष्पाक्रान्ता चन्द्रं दृष्ट्वानन्दमाना प्रयामा
नारी सा मे धन्या कीर्तंगायनार्थं समेता ।१२६।

शिवदगर्ति सारुप्यावर्षणे सन्निकर्षे
भवदहनमाहात्म्यं सांध्यकाले सुकाले ।
शमविगतधैर्यं सः साधनेन लब्ध्वा
मुनिपरिपाकावेक्षालोचने सम्मतौ तौ ।१३०।

दृश्यं जातं न लोके शातत्यगांभानुजालं
सत्यं रात्रौ सुशोभा शान्ता जगतचन्द्रलेखा ।
लोकै स्यं कर्तनं जातं मात्रैत्र सगाद्यते किम्
दोषो नास्ते कवेः छायायाः वराकस्य नित्यम ।१३१।

निखिल सुरमुनीनां मोहजालस्य दात्री
सुरजतरजनीयं कालरात्री विभाति ।
अनबधिवधिकेवास्थिसंहारशीला
नरनिकरकपालैः मालिनीदाहमत्ता ।१३२।

छिदो यः विधान रचितं कदम्बैर्विरगैः
सदम्भोधराणां बलिदानहेतो समेतम् ।
सुंसुखं विधस्तो ननु दुःखसंगो विसंगो
निनिमज्जन दुर्लभमीश्वरांशे वरांशे ।१३३।

धर्मं देहाय सहर्षमिच्छन् पर विचेतुं
त्यक्तुं शोक क्षतकीर्तिमैत्रयः सदा वरोऽयम् ।
इच्छामि शस्तमये समाजे मनोहतस्य
रिक्तौ [illegible] मनासि श[illegible] धरायिनाय १३४

परम्परासु समुदायितासु विपिनान्ते
प्ररोहणं तरुपलमाशु लब्ध्वा सरलान्तः ।
उच्चैः स्खलन् सफलत्वमाप समतायै
संलग्नसन्धि सुधिभिः समर्थे शमितार्थे ।१३५।

सहचराहृतां सदनरागरंगा रमा
सरसरमणीयगतिभिः शुभा मन्थरा ।
रुचिरतरभाससरसस्तटान्तेऽनता
विपिनतिलके भवति नम्रसान्द्राकरे ।१३६।

श्रुत्या निपीयाद्य विनम्रवाणीं रसाधृतम्
खण्ड विधातुं स्थानिकं कुदारुम् रसाघृतम्
आरुह्य शाखां सन्निपत्य भूमिरसाघृतम्
सम्मिद्धनं लब्ध्वा त्वरं प्रशस्तं रसाघृतम् १३७

वीरः पुरोधेव प्रहर्तुरास्य मलीमस
तस्मिन्नकाले शुभधीरपश्यत् शुभेतरम् ।
तथ्यं नु वाक्य प्रकृता सुरम्य सुरागिणं
मर्त्यापकर्षं विकृत विदुष्ट पराजितम् ।१३८।

विचालनेनाविमलं मलीनं विकारितं
वगाह्य शास्त्राणि पुनर्गवानीतराणि सः ।
विचिन्तयन् दुष्टकथापवादं विलेखनं
विवेदनीयं गतसौर्थकं हेतुमद्वरम् ।१३९।

जम्बालभरमृगचर्मवस्त्रे विगाहिते
[illegible]

आदिश्य विरचितमित्रसन्नो विरागतः
वृक्षोपरि पदमवाप शीघ्रविरामवान् ।१४०।

कामदं मनोहरंसमस्तलोकसारज
लूणकं विलासनाय कामजं विभाव्यते ।
मानसं न कस्य मोहमेति सत्वरं वरं
सारसस्य-सारिकागतप्रपञ्चलोकने ।१४१।

इन्दूपमः पृथुकान्नभाजः शुभसाधितं
निष्कास्य चर्वणसुप्रवृत्तः समरांगणे ।
कृष्णो ध्वनेर्विकटो वयोधा विषमासहः
दुर्वृत्यमाञ्च चुकोप तूरं प्रणयानताः ।१४२।

चेष्टानुतप्तेन विधातकेन यवीयसा
नेत्रांभसांरुद्धमुखो नता मनसो गतिः ।
निवर्तनार्थं मनसातिपापभरायितो
लब्धायशो मूकमनोकहस्य समानकः ।१४३।

विप्रस्य तोयेन शरीरयष्टिर्व्यवहृतिः
कम्पायमानोऽतुददन्धशोकैर्विजर्पिले ।
शैथिल्यदासश्च बुभुक्षयान्ते मृजितरुट
विस्तार्य वासांसि मुखं जुगोपे वरनभम् ।१४४।

सरसिजसमुदयदहनपटुतमा
खगकुलनयनगतनवलसवला ।
सदनहितहृदयसदयशशिकला
विहरति न विलसगतविकलमना ।१४५।

अपि विहरति विमलविशदधरणौ
स्रगियमसितविधुरित सुमनतला।
अनवधिगतविरहदहनसुफला
सरति नु शुभफलदविभवविमतिः ।१४६।

मदयति विपिनजसुमनविमलिता
शमयति मनसिजमणिगुणनिकरः ।
दयति नु सुतरणिविनयविसितौ
जलधरसुरचनविभवपरिगतः ।१४७।

अभिज्ञानादानैर्विहरणरतानां नराणां
वशे कुर्वाणा सा रमयति मनांसि स्थितानाम् ।
प्रियाणां साहाय्येनाढ सुराभिफले संशयास्थे
समुत्कृष्टं लोके प्रवरललित नाम सार्थम् ।१४८

विमलमतौ तरगितरतिश्रिया सरागा
स्वपितसुखैः विलासभरवागिनीनुवाणी ।
उपकुरुते न मातृकुलसंस्थिता ललामा
भजनकृतां वधसमा विभाति रामा ।१४९।

कुसुमितपुष्पभूषिततरोऽस्ति सततम्
गरुणरुतेन तामसवनं सघोरकरम् ।
अचलसमाधिमेति यमिनांगणः तल्लजः
धरणिरियं तमोमयकरम्बितः तत्वतः ।१५०।

विभासते विभावरी सदागमेन साम्प्रतम्
यदा गतं दिनं विकारिभावनाभिरञ्जितम् ।

मनोविकारमेति पञ्चचामरं बिलोक्य किं
यदर्थनां करोति मानवः प्रणत्य निर्जरम् ।१५१।

अक्रान्तः सः सदयसहितः शान्त्या विधुरितां
मोहान्धः सो मदनललितां दृष्ट्वा सुनयनाम् ।
लोकानां शोकजविकलितानां संधारयतां
दुःखैर्दग्धान् तुलयतिशासारैः सुदमनः ।१५२।

बोधयति नु संदानैः सेवाधर्मसुविरतान्
दुःखसमुदयैर्भावैः सन्यासी नहि लसते ।
आवरणसमेताः ये पापात्मापकृतिशयाः
तामरसभोगार्थं ध्यायन्ते वतचकिता ।१५३।

सावसरेऽधुना समदजगजविलसितं
चित्तं पदंसमाप्य हृदयभरणसरसिजम् ।
भावयते सदा कुसुमदलशतविदलित
सादरभावजैः किमुत विवहरति पवनः ।१५४।

चित्रपादधारणैः सुतत्परा मनोहराभ-
कान्तियोगसंधिता प्रशंमित्तामहात्मनापि ।
संयमी सुमानसे स्थितिः सदाशये सिनोति
किं करोमि भाविनी मनोविलासनाय नोहि ।१५५

मन्दाक्रान्ता वपयति वधूः प्रीतिबीज विदेहं
श्राव श्रावं पवनगतिभिः दोलितासारसेयम् ।
प्रेमालापे विरलितंगति मोहमेत्यारमन्ती ।
लोकाः दत्तो नयनसुभगं दर्शनं धन्यवादम् ।१५६

शोभा नित्या सरसबला सारा मनोहारिणी
सा जाता किं विरलमनसा ग्राह्यतानु कान्तिप्रदा।
सत्यं लोकप्रकृतिसुभगा भावाभिरामांगिणी
दृष्टा नेत्रैर्नहि किमधिकं वक्तुं मतिः संस्थिता ।१५७।

उदग्रहितो नरः सदयपात्रतां तालिका
जहाति मलतां सदा धृतिसमूहसंधानितः।
जयं समितिन लभ्यते गुणकृतं शुभं तारिकं
अतो भवति न सांप्रतं फलितधान्यपृथ्वी सदा ।१५८।

भाराक्रांता पवनगतिभिः सदाशयमंवितो
जीवः सद्यो वहति विपुलां तरंगितभावनाम्।
पादन्यासैः क्षितिधरपतौ विलायति सारिका
सर्वालीला विरमणगता समाश्वसितार्जवम् ।१५९।

विकिरति रसं साकांक्षं सा सदा सुनता मता
रमणवसतिं सृत्वा सार्धं प्रियेण सुसारसी
सुलपनपटोः पत्युः सेवाविधौ हरिणीरता
प्रमुदितजनो दृष्ट्वा शास्त्रेषु न स्मरते स्वरम् ।१६०।

तृणचरव्रजातः स्नेहः सदा सुखदायकः
तपति हृदयभावैः सद्योऽपि नाम समायते।
न गणयति हरेर्भक्तः दुःख दवं हि विलायते
अधिगतमनसा सा विद्या क्रमादमृतायते ।१६१।

जलवसतौ विरामकरणैः पटुता नवला
जलमलमेति मेघगगनेसनके विमलम्।

चलति नभोचरः सघनभावकरो सरणौ
वनगजवाससारभरणें सुमनं सुतरम् ।१६२।
रुचिरपदा वली भरति रागसुमोदभरम्
विगतनिशारते दिवसभारतहारकरम् ।
सखिजनताभितो विहसते शुभताधिगतिः
मदनविजृम्भितो संमयसागतकोलिकम् ।१६३।

तमिस्रैः व्याप्तेयं सघनवसुधा सारसहिता
नरो गां भीर्यांधा स्वपितिः तिमितः सान्द्रपुलकैः
न कैः सत्यं दृष्टं वसनपरिहारैः शिखरिणि
सरागं तादात्म्यं भवितुमनसादैन्यविकलैः ।१६४।

खण्डितवंशपत्रपतिते पतति तरुदल
नूतनधासजो व्यथयते जबसृतविरजः ।
पश्यति शूकभोगनिरतो भयरहितकुलं
भीरहितेसदरविमलितां भवनगतसती ।१६५।

मस्ता मानं किं परिहरति सा सांत्वना प्राप्य तूरं
ध्याने सलीना कुसुमितलताबेल्लिता भारतो या
वाताः खेलन्तो ददति परितो दिव्यशिक्षां सखीव
त्व तद्वैराग्यं विशदकरणैः ग्राहकेवाधिकुर्याः ।१६६।

सश्लेषैषा मन्त्रपरिगता मुह्यते मानसारः
रासोल्लासैर्विहरति सलिले शारदा चित्रलेखा
तस्याः कीर्तिर्धवलवसुमतां माध्यभागें सरागा
रागं कं सा परिचयसहितं चिन्वते सारहेतोः ।१६७।

भुजबलविजितं वनं संत्यनाराचमाध्येन ततं
मदनविहरणाय जातं सुधाधारभारैर्नतम् ।
प्रियदसुहृदि दानमानैर्द्रुतं रम्यमाणो जनः
विरहविपदि खेदखाद्यं नकिञ्चित्‌चिनोति स्थिरम् ।१६८।

क्षितितलनन्दने पटुतमाः सदाशिवः सेवकः
सदलविहारलीनमनदाः प्रवेशभारैः रसम् ।
वितरति देवदानवगणे सदाशिवार्थं सदा ।
विभवमदेन संशयभरः सुखाय संतानितः ।१६९।

घोरो जीवगणः करोति समये शार्दूलललितम्
दृष्ट्वा लोकजनो बिभेति परितो त्यक्त्वा धृतिपरम् ।
गेहं कष्टकरं यदा भवति का वार्ता वनगता
लोकः कालकृते समाजनिकरे सद्यो निवसति ।१७०।

निधाने कान्ताभिः शुभमदभरा संधीयनयना
सुधापाने मत्ता सकलवसुधा धारतरलता ।
विधौ पारावारे वसति सहसा काषायिततनुः
करोतीत्थं लोके सदनबमतिः सौम्येतरमतिः

दाये सेवार्थं जनमनसि विधौ नास्ति काचिद्प्रवृत्तिः
संचाराणां ससुविपिनवसता मोदमानां नराणाम् ।
हित्वा सौख्यं तद्विरहविधुरितां कां न चेष्टां करोति
संख्यानं के कर्तुं प्रभवति मधुर फूल्लदाम्नां प्रसिद्धम् ।१७२।

तमौ गांभीर्यं तद् विपिनपतेर्मेघविस्फूर्जित कि
मनिद्रो देवः सः रमणविरतो जायते सावधानः ।

वलद्धारावाहैः सुरभितसुमं दृष्टगन्धं चकास्ति
सदा सेवाभावो मुनिजनरतो नाममात्रं हिनस्ति ।१७३।

चटोः छायाधारं सततगतिना प्राप्तुंसुरत्नं नरः
सदा कुर्वाणो ये समयविगते धैर्येण कार्येरताः ।
क्षमाशीलाः सन्तो नमनगतिभिर्ध्येयं विहन्यात्र ते
चरन्ति स्वातन्त्र्यं हृदयनिर्हितं ध्यानं परार्थे मतिः ।१७४।

चन्द्रः शोभां नो ददति परिणतः कान्तिप्रदः संस्थितः
वर्षान्ते वायुः मदनपरवशो मन्दोऽपि विभ्वन्वितः ।
भावाः कः कष्ट सहितमधुरिमं सत्वाधिराजोऽपि यः
कालो यातोऽयं नवविधिशरणं किं नामतप्त तपः ।१७५।

घोरामर्शंमहाभयंकररुषादेशेन देवालयात्
विद्युद्भाति च मानिनी हि दहते शार्दूलविक्रीडितम् ।
रात्री रोति कषायिता नु तमसा हस्तोऽपि नालक्ष्यते
शीघ्रं धौर्यंपलायन च मनसो बाधा न साधारणी ।१७६।

जायामोदं ददाति स्वभवनवसिता द्वारनिहिता
यावद्वदं परार्थं विरचयतितरां ससृतिपरम् ।
कामार्त्तानां प्रमाण भणितिमधुरकं ज्ञानसुरस
सेवाधर्मे विलग्ना भुवनभवनगाः गानविधुराः ।१७७।

सुमनायते मनसाभिरामसमुत्सुकः सुकरो जनः
विजनेऽपि नास्ति कदाचिदत्र विरागभावितभावना ।
भयदायके परिवर्तने क्रियते मनीषितगीतिका
वरदानरूपकरो गतो विषमे परिष्टितिशकरः ।१७८।

प्रत्याख्यांन विधातुं नयनकमलकैः सत्वेसुवदना
स्वातंत्र्येणात्र गन्तुं प्रभवति किमुतं हर्षेण विमदा ।
यावज्जीवं विधानैः समचरितमना साम्यं सुतनुते
आनन्दास्त्रोर्नराणां सदयसुतरतां योगं विधिगतम् ।१७९।
शोभन्ते स्रग्धराभिर्विमलितमतयो विश्वभावाभिरामाः
वर्षमिध्ये गृहान्तः सहजवनितया धर्ममारे विराभा ।
धन्याः सेवाभिकामैः स्वतनुकृतबहुलाः कर्मधारा सुदायाः
वन्याः लोकाः विमानैर्भरचपलितसामदानाधरैस्ते ।१८०।
कंपार्तैर्नामर्षैः सद्यः सुमनधवलितपरिणतिमती या
संसारे शोकावेगेभ्यो विकचकमलसुतरणपटुहंसी ।
किं किं नो नेत्रैः संलापैस्तेमुदमतुभवति विजनमधुमदनभारैः
संताप क्रीडाभि.दत्तो मृदुनलितपवनाचलितदला सा ।१८१।
मत्ताक्रीडं हस्तीनां तद् भुवनजलभरमधुरसरसि तटे
गोपस्त्रीभिः सेबाधारे भजति गणपतितरुणजनसुरसः ।
सान्द्रानन्दैः संचारैस्तैर्नयनसुमसुभगगजनिमिलकया
केषां मोहं नो दत्तो सा सघनवनगतसुरतभृतरननणीं ।१८२।
संतपनैस्तैः सचलनयनया साबसरा सुरतविरसतन्वी
वर्षणकाले सुखदविहरणा मत्तभरा सघनसुजनवासा ।
सत्यपरा या व चनपटुता मोदयते सुजनभरसभायां
•कैरववर्गः सुजलभतटे धारयतां जनमानसपराणाम् ।१८३।
क्रौञ्चपदा सा संचयने किं सवलविहरणजसदयमधुमदा
रास बलासां शान्तभराणां बिनयमनसयत सुलभ विरमता ।

कस्य नतिं नो कुरुते सा मदिरा शुभनयना सचल गतिरमा
श्यामसुधारा सारतिसह्रा सारसमयसुरतबिरह्मना ।१८४।

नानारत्नैः सपातैस्तैर्नयनपथमनु-
गमनवारं भुजंगर्विजृम्भितम्
भीतेर्विस्तारं नतं लोके भरतिसुजन-
गणमनसः विनांविततताय ।
संतानाना लोभैः सौख्यैर्वलति
वनगतिविधनमनोहरः
ससारोऽथं लोभोन्मत्तश्चलति
सुखरहितं मनसासुसंभरितुंसदा ।१८५।

सेवते साभिरामः विरामं विरावं खगानां
शुभानां मदोन्मादभोगे वने
केवलो वन्यजीवः स्वतंत्रो विगानैः
सुयोगैर्भरो मत्तमातंगलीलाकरः ।
वर्षणे भावमग्ने मनोदानभावेसरो
सेवको मध्यधारा वहाभोगकः
कं न मित्रं सहाय्योददानः शुभं
लाभमेतींति मन्यामहे मर्मधारागतः ।१८६।

घोरसंतमसा दिवा परिपूरितं विभागतं ।
मेघधारणतत्परो ललितेन्दुर्न चकासते ।१८७।

सांकारितशीकरं सुनीरं धूनिपुष्पवने संगतेयम् ।
वाणो मदनस्य मोघकारी शान्तेर्भद्रविराड विराजते ।१८८।

दरवेगवती शरदो या जीवरणान् वहति स्थिर शीला
मधुरा सुजलापि नदीयं भव्यमुखा नवला प्रतिभाति ।१८९।

समयागते परिजनोऽयं दुःखविधानतत्परतया युक्तः
किमु संसृतौ शुभदयातः केतुमती विरामसुमनांकिता ।१९०।

न श्रृणोति परार्थभावनां जनताभिः कथिता वियोगिनी
दरता नहि भावि जीवने किमु सेवाकृतसुन्दरी मता ।१९१।

आख्यानकास्ते जवसा सुभागाः
सतां महान्तः कुटिरान्तकोटौ ।
न स्थानमाप्तुम्नययाभिभूतौ
प्रशान्तछात्रौ गुरुसंनिधाने ।१९२।

सम्मानार्थं मति कल्पनेन
विक्लिष्टकार्याणि पुराकृतानि ।
पुनः पुनः संस्कृतिमान्यभेदैः
व्याख्यानिकोबोधनमार्जनाय ।१९३।

गुणवन्नभिजातिजनः सदा सेवकवर्ग सहाय्यगतोयः ।
परम सरसि स्थितसारसं, वीक्षयते सुजनानुपचित्रम् ।१९४।

समतामतिमान् मदायितः सः
बिषमे सचयसारतोऽधिकारी ।
कुरुते कविता कषायितां तां
कथतेलौकिककालभारिणी नौ ।१९५।

देव तदेतरद्वृद्ध कथाभि-
र्यशमिवेन विभाति सहसा ।

संस्कृतिशभ्यमयी प्रकृतिः सा
नगरजनाः वशिताः द्रुतमध्या ।१९६।

तरणिकिरणजापसंहितं नगजडितं सुमनोहरं जडम् ।
सुमधृतसलिलं प्रकाशितं तदपरवक्त्रमिवायभासते ।१९७।

कलहंससकुलेन मदायिता, वहति वारिभरा हरिणप्लुत ।
सभयं कुरुते मनसोऽवर, सघनवासधरा मदनान्विता ।१९८

रदनविकसिताननसंपुट
कदनविषमितो विमावो वभौ ।
मनुजसदनसेवितशंकर–
मति विमलितदेहकौमुदीसितः ।१९९।

पद्यसे जले सम्मागते यथार्थे
मुर्खो ततो विजायते नभः सुरवयम् ।
वर्धते पिपासया सदानु याञ्चा
रहस्यमध्यभावना मनुष्यजातेः ।२००।

व्रततिकलिकयामिलयिता या पतनकरी छदपक्ति पुष्पिताग्रा
दयितजनवियोगमात्ररक्ता सुभगदयार्द्रभृतामानसेयम् ।२०१।

राजते नभसः संघितं शंकित–
भासो मृगांकशासकेन शासितं यत् ।
किं करोतु जनो संशयान्वेषण–
तत्परः सरोषमानसे मृगीयमाणः ।२०२।

मधुमदभासितभासुरोऽसुरें
विजने विमानसे संभावनेमः ।

वितरयते परमं पराक्रमं
समये परागतमानं मञ्जुसौरभम् ।२०३।

देवास्त्रिदिवं विहाय सेवया निराधाराः
षट्पदादिर्जीवमायिनो निपाताः ।
ज्ञाने प्रणये कृपासुपात्रवद् विरामांगाः
त्रासदानभीतिभारिणः सुजाताः ।२०४।

वर्षा काले पथ्ये पशुगणसमुदायमध्यगतो जनः ।
स्वकीयभेदं विहाय रमते परस्परमिलितः ।२०५।

विरोधैर्हिस्रः समयेन बाधितो
न कुरुते सरोषतरम् ।
अतएव विपुलमनुष्यभो
देवगणान् न बोधयते ।२०६।

चपला भवेत् सदा श्रीः
विलोक्यगतो मनुष्यो यः ।
तस्यैव कीर्तिरतुल्यभवाऽस्त्रि
वसते ससुखेन नरः ।२०७।

चयने जनार्दनी यो भवेत् सहासप्रकीर्तितो भावः
मुखचपलेयं विभाति लोकगतः शुभप्रकाशः सः ।२०८।

जघनचपला प्रवासे रमते न मादकतायाम् ।
का का गतिर्भुवनेऽस्ति न जानते लोकमनोगतः।२०९।

गीतिः कोकिलकंठाज्जाता विरागयुक्ता सा ।
कं मादयति न मुग्धा लोके विभावर्वराशैः ।२१०।

आर्योपगीतिकेयं मधुरा मुरागैर्या ।
गीता मानवभावैस्तथ्या प्रतिभाति सा ।२११।

सायं विहारकाले लोको रमेत शुभान्तरम् ।
नो प्रीतिः सा मानेऽजायत समाजविरागजा ।२१२।

आर्यागीतिः सुखाय केषां न जायते लोके सा ।
यां श्रुत्वा मुनयस्ते मुग्धाः अधिकृतो जातः ।२१३।

कर्मिष्ठाः लौकिकाः जनाः वैतालीये संगतेरताः ।
स्ववर्तनं सार्थकं सदा दधाति भावैः सारदायकम् २१४।

सुरते सति स्वगतभाव-भवन समयोद्गता सदा ।
संहनतगतिरागभरौ विरते मुनिःमनसभावनार्दिता ।२१५।

वक्त्रं यस्य सुरापाने लीनं सेवासमुत्साहैः
कथनाय समर्थाः के कस्मिन्का का गतिर्लोके ।२१६।

चरित्रं ते विहायैव ये नराः सुब्रमानिनः ।
पथ्यवक्त्रेण रोगार्णि नश्यन्ति मधुपाग्रहे ।२१७।

वर्पागते सहाय्यो न श्लोकर्ते यॊऽनुचारकः ।
किं परिवर्तनं जातं मानवस्य सुजीवने ।२१८।

कुसुमितकलिकालिः
भवभयकरणचतुरमाला
सभयगतहृदयमथनविषमभावा
विहरति सरलसुमनविहरणविमलितपीडः ।२१९।

ऊर्ध्वमवलोकयति
पथिकजनो मदनोत्सवे रतः ।
जलदमवलोक्य विपासितः कृषक इव
मनोरमा विहरति गृहमध्यगता पतिसंगता ।२२०।

व्याधितः समये विराजते शिवदोऽयं
सरते सदयमुपस्थितप्रचारम् ।
सुरतसदनसरणम्
कविजनमनसपरिणतिरूपदायः ।२२१।

विस्मृतागता मे मनसे
किं करोमि जगति परवशः ।
सेवकोऽनुभवति स्वाधीनतां
मनोभावनैव सर्वोपरिस्थिता ।२२२।

शिवता मयि समायातु
लोकगतोऽपि सुखी सदा ।
विस्मयं तनुतेऽधिकं जनः
कथनं मे विकत्थनं गतम् ।२२३।

कुटिरनिवसति सौख्यं विना निन्द्यसौम्यं
कृतशुभफलमेलौ वृक्षदत्तं प्रकीर्णम् ।
विपिनपृथुलनिन्दा प्राप्तदैवत्वमाप्तौ
स्मृतपथनुयात मित्रयूथं न सुप्तौ ।२२४।

इतीन्द्रविरचिते सुदामचरिते महाकाव्ये छन्दोत्वर्षा-
भिधेयः तृतीयः सर्गः समाप्तः ।



# ॥ चतुर्थः सर्गः ॥

सुधारधाः धर्मधुरन्धरास्ते
दानाननाविस्कृतमानवेन्द्रा ।
मान्यैर्नत्रीनैर्नमिता नरेशैः
चरित्रसारैश्चतुराश्चरन्त ।१।

रहेण वायोः पतितान् विभाव्य
मात्रंकविच्छेदगतान् मृताञ्च ।
इतः कुलाग्रादकुलान् सकोषान्
स्वतश्च हुं भाग्यबलान् वदन्तः ।२।

रमन्त्यशुद्धे जलभाजने च
पत्राणि वृक्षात् पतितानि यत्र ।
दन्तु दुर्गन्धमसत्त्वजाले-
र्जलागतान्युच्चपदानि तानि ।३।

विशिक्षयन्तः शतधा जघन्यम्
हा हा सघोरं वनराजशावाः ।
रवां ददानाद्विरदाय भेत्तुं
सीमानुरूपोऽभिजनस्वभावः ।४।

इन्द्रज्ञभावाः सुकृतास्तमःसु
धीरा नराः प्राणभृतोऽध्वरेषु ।
दूरान्तमीयुर्भयसंभ्रमेण
यतो प्रसिद्धा ग्रहणाय [illegible] ।५।

विधानधाराधुरमावहन्तः
शंखासुरं संहरणं विधाय ।
चक्रुः प्रयाणं गुरुपुत्रसार्धाः
ज्ञानञ्च जन्मान्तरमुत्क्षिपन्तः ।६।

प्रामाणिकानन्तसुखस्य तन्त्री
गीतेन शास्वत् विरुदस्वरेण ।
सम्मोहिता कामभुवो विभावे-
वैराग्ययुक्ता शुभरागयुक्ता ।७।

धन्वास्थलं मायिककल्यदुर्गम्
उत्तालनद्यो विहरन्त्यनल्पाः ।
स्रोतोभिराच्छाद्य भूमेर्विभागं
सर्वस्य कालो वचन सदुक्तम् ८।

जाताः पुरा के न सुखं विहाय
दुःखानुभूतौ मनसो न लाभम् ।
भाग्यस्य दानं स्वमनोविरामं
सुखांशमाप्त्वा बहुमन्यमानाः ।९।

नारायणाकारवशेन्द्रियाश्वाः
धर्मे तपन्त्यन्यसदिच्छयैव ।
लब्ध्वा परेभ्यः स्वतनोर्विकासं
दयां बहन्तोऽनुशयार्धचित्तैः ।१०।

कल्याणकृद्ध्यानवशाः जनेषु
मानार्थिना राजजनेन पूज्याः ।

वस्त्रावनम्राः गृहसारमिन्नाः
जाताः वने कन्दफलैर्विनेयाः ।११।

संतोषिणा दर्शनमात्रदीक्षा
अन्तः समेत्य परमोत्तमास्थाम् ।
येषां सदाभाववशा विभूतिः
तेषां कथचिन्न सुखस्य लिप्सा ।१२।

इन्दोः करैः सत्प्रतिबिम्बभानैः
लोलाञ्चितैः तोयजमगलीयैः ।
नवैः जलै केशरितैर्वितानैः
भ्रमालया रात्रिरियं चकासे ।१३।

जलाशयेन्दुः जलमानतोऽस्ति
लक्ष्मीभृता सारतरोः करेण ।
पादानि धाराचलितैः प्रच्छाल्य
चिकीर्षिता दानसमं सुलक्ष्या ।१४।

नभोगणैः श्रावणनीरसारै
वृंक्षाश्रितः पक्षिजनो निपातः ।
तथापि वृक्षः श्रितपूर्णचन्द्रः
आह्लादकैः को न विराममेति ।१५।

सबुद्बुदं मूलचरं तरुणां
दृष्ट्वादिसृष्टिः मनसः समक्षम् ।
येनाजगद् भाति विवर्तमानं
क्षणं स्थितं नास्ति पुनः पुनश्च ।१६।

नीचैः सुदूरेऽर्जुनरंगसंघं
नीलत्वमाभासतयाऽनुमीय ।
मेनेऽधिमात्रं कविताध्वविद्भिः
मेघः धरायां पतितो नभस्तः ।१७।

मेघात् प्रपातेन जलस्य नक्तं
यद्बिन्दवः वृक्षमधिष्ठितास्ते: ।
आम्राद्रसाढ्यात् पतनं त्रिचक्रुः
प्रभञ्जनेनान्यदिमं समेत्य ।१८।

ईशाप्तदानं सप्रमादयोगं
वन्यागतं संप्रति मोहभारैः ।
सौरभ्यमायाति सुमाभिलुब्ध
यादृच्छिकं तद्विधितो विनष्टम् ।१९।

साधारणं नागरागिरुच्यं
यत् सूक्ष्मकोशं स्फुटितं विकीर्णम् ।
वाच्यातिरिक्तं कुसुमस्य जन्म
तन्मेचकं धूलितले विलीनम् ।२०।

वायुप्रवेगोन्नतशाखिन हि
शाखाग्रभागो रजसा गृहीतः ।
बलेर्मखे याचकवामनाय
प्रमापणे पृष्ठसमर्पणं नु ।२१।

रवेर्गते भ्रामकभावकारि
जलागमं प्रेरितवानचालभ ।
रूपाकृतिः रगमयी विभिन्ना
मनोहरी चञ्चलशाटिकेव ।२२।

केनापदेशेन विनाशमार्गा-
दुद्धर्तुमिच्छन् तृणमाशु भावि ।
दैवैः हतानां न जहाति नृणां
कर्त्तव्यभावस्य वलं वहुत्वम् ।२३।

घासाश्रिताः नीरपराहतास्ते
जीवाः स्वरक्षां परतो विधाय ।
श्रोतातपेनाप्तवलेन प्राहुः
सरक्षणं भाति विधौ सहाये ।२४।

सुस्थः क्षणे वातरवायुरुद्धा
कल्यस्तु वेगात् प्रलयं विधाय ।
संमोदवस्तुन्यपि दुःखभाञ्जि
चित्ता मनीषा जनुषां विकारैः ।२५।

रुजाहतेव प्रियलाभभग्ना
संतापहेतौ कदनं करोति ।
ऊर्ध्वं स्वनेवं भुवनातिपातं
प्रेम्णः प्रभावः प्रगुणेन शस्तम् ।२६।

प्रेम्णा जनः शक्तिमपूर्वजातां
प्राप्नोति लोके सुखदुःखयोश्च ।
बाह्यापरेभ्योऽशमनं तनोति
भावोत्थितं प्रेम प्रगदमानम् ।२७।

आकाशचारी न समीहतेऽन्यत्
सर्वत्र शुद्धं जलमापनीयम् ।
नेच्छां हृदः प्रेरयति स्थलीय
जलं [illegible] ।२८।

समे समायान्ति दिनान्तमाप्य
प्रेयान् युगात् प्राणहरे विलक्ष्यः ।
नार्यः वराक्यो लुलितार्चितापाः
पापिष्ठमव्ये स्थितचक्रवाक्यः ।२६।

लोलांगिनी बालमृगी समीक्ष्य
भूत्वाऽऽभयाऽऽयाति विभाति याति ।
पारंगता संशयनीरसेतोः
श्रित्वाध्वमन्द्र मुदिता समेति ।३०।

गुरोरनुज्ञामविचारणीयां
समीहते संवरणे समग्रः ।
तस्मै व्यवस्था पिहिताय सम्यक्
किं कल्पते कल्पलता फलाय ।३१।

दयास्वभावेन परोपकारे
लीनाः जनाः स्वार्थविहीनजाताः ।
तेषां सुकर्माणि मनोहराणि
ध्वान्तेऽनुकार्याणि निदर्शकानि ।३२।

छन्दोऽनुवृत्तौ परुषः सजीवः
मृद्वीं मुदा साम्यगतिं पिपर्ति ।
यत् यो करोतीश्वरप्रेरितः सन्
सुनिश्चितं किं करणं जनानाम् ।३३।

गोमायुसख्यानुभवस्मरद्भिः
सिंहैः स्वभार्या क्रियते सहासा ।
संज्ञापयद्भिः नयलोकमार्गान्
संभेदनीयाः न महाजना हि ।३४।

मित्रं विना ज्ञानमनाः सशोकाः
सेशं समारभ्य परोपकारे ।
मोहावलम्वास्तमसः परीताः
कुर्मो नुतौ योगबलावगाहम् ।३५।

संजातभावैः सुमनोहराभैः
प्रतिष्ठिताः मध्यसभ सयत्नम् ।
संवद्धकार्याणि समाप्नुवन्ति
वदान्यधन्याः जगतां जनेषु ।३६।

लघूनि लोके स्खलितानि सम्यक्
सुदीर्घरूपाणि भवन्ति तूरम् ।
मुमुक्षुजीवस्थितिरस्थिरास्ति
प्रयत्नसंपादितमानसारैः ।३७।

तनुत्यजस्ते सुतरां तरन्ति
भवाम्बुधिं सत्यपरायणाः ये ।
संज्ञानसत्यं जगतां प्रतिष्ठा
सदामता भद्रकराय तन्त्वे ।३८।

उद्वेगमावेदयते न दुःखे
सुखे प्रहर्षं मदतां च भेजे ।
तथागतः सज्जनवर्गहंसः
क्षीरं च नीरं भजते स्वभावैः ।३९।

विद्याकृतं नम्रगुणं प्रकर्षं
समुन्नतौ साधिकृतां वितेने ।
संजीवनं संचरतेऽधिलोकं
संसारकल्याणफले हेतोः ।४०।

हे दैव ! किं त्वं वधकोऽसि तस्मिन्
यस्मिन् क्षमायाः निधिरा समन्तात् ।
अतो न युक्तो बलशालिनि तत्
बलाबलौ युक्ततमे सुजातौ ।४१।

आलम्बनार्थं जलजातवर्गाः
सापेक्षघातेन फणायिता नु ।
फेनैः सुदुर्घषतरीगतायाम्
नद्यां विहारं सहिताः विचक्रुः ।४२।

भ्रान्ते स्थितिं ये लघुजीव जाताः
प्राप्ता गतिं प्रश्नविधौ न योग्या ।
साघोतलं सोच्चतलं शमित्वा
चित्तं विकारैः स्वगतैः प्रसित्तम् ।४३।

अश्वायमाणा सुजवाधिरोहाः
संधातुकामा समरांगणस्था ।
हेतुः विनाप्युद्गत बैर बीजं
नीरं स्थल त्रोटयते विसंगैः ।४४।

रोमाञ्चदेहैर्नयनाप्रमेयाः
सिक्तोर्जलैर्घोटककुण्डलांगाः ।
संयोगिनः ब्रह्म परादिहान्ते
आयान्त आत्मानुहराः विभान्ति ।४५।

अव्याहताशाः न च निन्दनीयाः
छामैव भेदं तमसोऽधिगम्य ।
धातुर्विघातेन जनांगभाजः
स्वार्थं कदाचित् स्वगतं भजन्ते ।४६।

आगत्य दूरादतिभंगुराशाः
भीष्मे जवास्तायुषि सोढवन्तः ।
ऐक्ये सहाय्याः स्वजनानुयाता
वृत्तौ कृताचारमयाः वियुक्ताः ।४७।

विद्यार्थिनो घोरतपोऽनुकार्यं
गेहस्थितानां परिणामनन्द्यम् ।
गोलंगता विश्व थितात्मभावाः
मित्रं विना दुःखतराः भवन्ति ।४८।

हिंस्राः समीपं हरिणाः प्रयाताः
अन्यस्य वार्ता विषये न गम्या ।
अत्याहितं कारणमन्धजातं
माधुर्यमुग्धो निकटे वियोगः ।४९।

वैमगलाकारभयं विधेयं
पात्रं कुनद्यः प्रददर्शतुस्तौ ।
क्षीनामिवायान्ति गिरेर्जलानि
रक्ताः कुकाले व्यवसायमान्याः ।५०।

संघर्षणैरुर्ध्वमुखं च नीचैः
नीरे भ्रमं सावसरं वितेने ।
येनाभितो तद्भ्रमताव्यपेता
मायांकिता ज्ञाननये विदेशे ।५१।

हा हन्त ! बुद्धेरभिभावयित्री
हृद्भावना जीवजने चकार ।
अब्यद्भुतं वर्षणकालिकं तद्
सभावनीयं मनसा न सर्वम् ।५२।

नापारयन्ती विरहाग्निघापं
पत्युर्व्रतादर्शमयी विभूति. ।
सांदीपनिः छात्रगणान् विमुग्धा
यातुं रहश्येऽषि शनैर्दिदेश ।५३ ।

मायामयं व्याप्तजगत्स्वरूपं
दु.खं सुखान्ते रसवद् विवृत्तिः।
देहाभियोगं सहसोपसर्पि
संधेयशाकैर्भरणे समर्था : ।५४।

वाग्दोषजं पापसमूहमूलं
भावी बलीयात् न तु तुच्छबुद्धिः ।
पौष्कस्यमारुह्य शिरः स्खलन्ति
वाग्संयमः साधनयोगयोग्यः ।५५।

आकर्ण्य वाचः पशुनानुवाद्यं
मित्रे धृताधानविरक्तलोकाः ।
संतापमापुः प्रहसन्त एव
सौख्यस्य वाधाः बहुलीभवन्ति ।५६।

लज्जासु जीवाद्यतिभि र्निवासाः
निष्ठाः समाम्नाय समुन्नयंगा ।
पुष्पायितां तां नियतिं निरुध्य
हीनायमाना अपियान्तिशिष्टाः ।५७।

वेदान्वितास्तेऽधिगताः विपाकं
प्रान्वेषणीकृत्य संपर्कभूमौ ।
प्राचीरनिर्माणकृतेऽप्सरोभिः
सचित्रधात्वन्वितनागराजि ।५८।

सर्पाकुलाः संप्रति शाखि शाखाः
छायाकदम्बेन गतानुमेयाः ।
देवस्य भूतिर्निकषा जनेशं
ग्रामं विजानन्त इवाभ्रमन्तः ।५९।

फेनैर्नद्रीशं न गतैर्जलेशं
देशं महेशैर्द्युतिभिर्नगेशम् ।
प्रत्युत्पतन्तः परिचायकास्ते
रामस्य कीर्तिं बहुशो मिलन्तः ।६०।

मत्युः स्थिरः शासनकार्यकर्त्ता
ग्रन्थैः सहाय्यो नयदानदक्षः ।
आध्यात्मनि स्थूलमयात् यथावत्
भ्रशात् प्रथक् तर्कं गुरुञ्चकार ।६१।

मान्याः मनुष्याः बहु जिह्नदुःखैः
ह्रासं नयन्ति स्थिरमानसास्ते ।
दुःखान्नियन्तुं न परः प्रयत्नः
आप्तुं यथा तत् सहते मनस्वी ।६२।

भावो बली संयुगराजिकायां
संवित्तिशर्ध्यां भरते विहासम् ।
शाताय संवादसमेधनीयं
जानन्नपि कर्म जनैः सुपन्नम् ।६३।

सार्धं वयं नित्यसजातविद्याः
जाताः विकारत्वमशेषमालम् ।
ध्यानाश्रिताः सन्निधिमाप्य साधु-
प्रेम्णा वसन्तः समयोव्यतीताः ।६४।

दीप्रं विशुद्धं हृदयं विधाय
दोषान् विजेतुं वनवासलग्नान् ।
साकारधर्मं शिशुभाग्यजातं
विद्यालयेनोद्धरणे विनेताः ।६५।

येभ्यां सहैवासरसञ्च पूर्वं
संपद्यते खेलनमन्तिकेऽपाम्
गोष्ठे रसन्तः प्ररुदन्त माने
इष्टौ भ्रमामो विहृतात्मचेताः ।६६।

जानेऽपकारो विहितो न केन
नष्टं न वादौ सकलं तपोभिः
नो केवलं दैन्यवशाः विदग्धाः
धामाः प्रवासाः वनवासिदासाः ।१६७।

आदर्शं विस्रब्धगरं समाजं
नग्नाः वनेऽभीत्सितभावनायाम् ।
गौणाः वसामो प्रतिबन्धहीनाः
आगामि संसार चटूं विचिन्त्य ।६८।

भीतिः खलान्नास्ति सुशाग्रुसेवा
सपादिता जीवनसौभगाय ।
दृष्टिर्हि भिन्ना सततंस्तवैस्तैः
सर्वाणि साध्यानि महामनोभिः ।६९।

कुञ्जे समाकर्ण्य रवं वितालं
पत्नीं पतन्तीं जलमुद्वमन्तम् ।
कञ्चिद् विशन्नं कलभं विशंक्य
हर्मिलने हर्षे गिरागुशोधुः ।७०।

आपद्गतानाम् विपिनाश्रमात् ते
संरक्षकाः पुष्पवनस्य तस्य ।
कारुण्यशब्देन हृतात्मसंज्ञाः
प्रश्नं बभाणुर्गमनाय तुरम् ।७१।

प्राचीनमार्गेऽति परिश्रमाम्भाः
सावेगराजीवमुखाः घटन्ते ।
सद्ब्राह्मणानां चरणौ भयेषु
संपालनायांकुरितौ तथात्वा ।७२।

शिष्यान् समादाय चलन्ति वृद्धाः
स्वर्गेन्द्रशोभां वहिराक्षिपन्तः ।
धावन्त उत्सह्य समाप्ततोषाः
औत्कंठ्यमायान्ति जनानुदारान् ।७३।

इज्या विभूतिर्वनवासितानां
सामान्यवेशो विनतानतेषु ।
आलोक्य मान्द्यं यमनो निदेशे
दाहंसमासादयति प्रकामम् ।७४।

वात्यानुतापोऽधिकतां वनेषु
याति प्रमत्तावनिभाजनं यत्
सह्यं सदाविष्कुरुते परोक्षं
विद्येच्छुवर्गो गृहभेदितो यः ।७५।

यूयं न दुष्टाः घटनापिधानैः
विद्वत्सु मान्याः परलोकदर्शान् ।
तत्वान्वये कालविधौजीवन्तः
सौम्याः सशक्ताः सुहृदो भवेयुः ।७६।

काङ्क्षन्ति सेवां जीवनान्तकाले
संवादबद्धाः गृहिणो मनोभिः ।
कुण्ठाग्रचित्रं प्रवदन्ति गेहं
सामाजिकानन्दमरन्दपूरम् ।७७।

मित्राणि हित्वा शवतुल्यमेताः
कस्मात् प्रभाते शरदि स्फुरन्तः ।
गच्छन्ति दुःखे स्वगुणं विहाय
कालौ न कस्मै परिवर्धतेऽत्र ।७८।

आवश्यसिक्ता मृदुला प्रशस्तिः
मित्रत्वमाप्तुं समतां विलोक्य ।
हीनाः सधर्माः सुजना अथापि
शुष्कं स्वजातौ समयं नयन्ति ।७९।

आशेयमानन्दममन्दमेति
कर्त्तव्यपाशेन पिनद्धलोकः ।
संचारयन्तो मनुजाः शरीरं
तुच्छास्पदं लोकधनं वदन्ति ।८०।

शूलं तु पुष्पं परिवर्तनार्हं
यस्याशयेनैव स योगधारी ।
लोकोऽर्थकर्त्तारमवेत्य लोके
शोकात् परं पारगतो विभाति ।८१।

लोकात् समुत्सारणमद्यजातं
गुप्तागतिं कः कलितुं समर्थः ।
आधार एको हरिरस्ति मुख्यः
तं गन्तुमर्हो न कृपां विनाते ।८२।

बालो विरौतीह रहस्यमेतत्
न ज्ञातुमर्हः सुधिया जनोऽयम् ।
सृष्टेः क्रियायां बहवः सुदोषाः
तेष्वेव दुष्टाशुभभावनापि ।८३।

संचारणा भ्रान्तिमती सदेयं
एकास्थया मानवता सुधन्या ।
ज्ञानाय तत्त्वस्य समीक्षणाय
साधारमन्वेषणमन्यदेशम् ।८४।

आरामवासेन कृतज्ञतेयं
लोके समायाति न हीन्द्रवज्रात् ।
श्रद्धास्पदं मानवताविभागे
उत्पादनं धन्यकृतित्वमस्ति ।८५।

गर्ह्यः सदाशा भरितो भवामि
केनापि पश्याक्रमविश्वमध्ये ।
वैरस्यभावं सृजते न साधुः
स्वल्पेऽपि शक्तिः परिशकनीया ।८६।

दर्वी दृशां संक्रमणं प्रतप्तं
तापाय किं संचरतेऽधिरात्रम्
आशक्तिदीनः ककुदायमानः
लोकोऽयमास्ते न सुखाय शास्वत् ।८७।

देदीयते यः सुमहत् प्रयत्नैः
संसारशस्तेन यशोऽधिगन्ता ।
सर्वं विधातुं मनसा समर्थः
कश्चिन्न किञ्चत् कुरुते स्वतन्त्रः ।८८।

उत्साद मासाद्य नरोविरक्ति
किं नाम नाप्नोति विहारशीलः ।
दुःखे सुखानां हृदयानुभूति
धत्ते नु हाहन्त मनुष्यधर्मा ।८९।

कौपल्यकानां चरितानुयायी
ध्यासं प्रतिष्ठापयते सहर्षम्
विश्वस्य कार्याणि पराभवाय
मन्ये न मेषागतिलोकसंघः ।९०।

प्रासादपात्रं भवितुं सयत्नाः
राजाश्रयास्ते कृतकं भजन्ति ।
स्वाधारमद्भक्तजनास्तु सम्यक्
कार्येषुसन्यासमयाः रमन्ते ।९१।

व्यक्तिर्विदेशेषु समाजमाप्य
सौख्यस्य सद्यः परमाधिकोटिम्
संयोजयंन् मानसशान्तिमेति
धन्यास्पदं जन्मपदं विधातुः ।९२।

प्रासंगिकीं मानवदुर्गतिं तां
लब्ध्वा न कोचिद् विकृतिं तनोतु ।
सर्वो न सस्तिष्ठति सौख्यकोशः
संतोषितास्ते सुजनाः महान्तः ।९३।

ध्वंसावशेषा मनुजस्य कीर्तिः
भावं विरक्तः सृजति स्वभावे ।
सद्यो दुनोति स्वगतानुतापस्
तापो नु तापः हृदयानुतापः ।९४।

व्याधिः समायाति कुचिन्तमालं
देहो मनोभिर्विवशो मतोऽयम्
संज्ञापितो मानसभावनाभि-
र्हीनो फलेनात्र नु जीवनेऽस्मिन् ।९५।

अन्तस्तलीयं गहनंस्वभावो
प्रवर्तनेषु प्रथमो मतोऽस्ति ।
आसादयन्ते सुधियः प्रसिद्धि
तेनैव सर्व क्रियते सहर्षम् ।९६।

मुग्धाः जनाः जीवनसार्थकाय
संसाधनं भौतिकमामनन्ति ।
भावेन भव्यं सपदिस्थितं तत्
किं विस्तरेणानियतेऽतिलोके ।९७।

देहंभरोऽचिन्तनरागरक्तो
नो कामदोयाति महान् हि दूये ।
सत्याधिकारेण विमुक्तिसाध्ये
स्वं जीवनं नाशसमर्थितं नु ।९८।

प्रायेण लोके रमते मनो मे—
संसारसारो न चिनोति कश्चित् ।
संध्यायमानं स्वतनुं विलोक्य
लोकापहासे रुचिरो विभाति ।९९।

चिन्नमनविधुरेणाशुप्रभावर्षिणास्ते
अतिरवरम सर्पन्तो बुभूक्षायमाणाः ।
जलपतितफलं तां तन्दु पान्ते निधाय
समतलधृतरवाद्यैः सत्कृतौ संनिरुद्धाः ।।१००।

इति वाचस्पति विद्यावारिध्युपाधि धारीन्द्रदेवद्विवेदिविरचिते सुदामचरिते मित्रान्वेषणनामा चतुर्थः सर्गः समाप्तः ।

# ।। पञ्चमः सर्गः ।।

परोपकर्त्ता विजनोपविष्ठः
संराधनासंकटगुप्तरूपैः ।
संवर्धितो बोधिमनः कृपायै
प्रतीयते स्वार्थगुणैः प्रलीनः ।१।

कृता विधात्रा प्रकृतिर्जनेभ्यः
तदेकदेशे विहिताधिकाराः ।
तथा वदन्तः स्थिरतामवापुः
नुमानवो गच्छति चन्द्रविम्बम् ।२।

अनेन कि यो न जहाति सत्त्वं
सुमित्रतान्वेषणतत्परार्थः ।
शश्वत् सुजाते श्रयतीह देहम्
न संभवो मित्रसमागमः सः ।३।

यशस्करः शोकसमाप्तिकारे
क्षमः सदोद्वेगकर्ता महात्मा ।
एतद्गुणाविष्टजनोऽस्ति मित्रं
निराश्रया मित्रविहीनलोकाः ।४।

कथं भवेन्मित्रपरः सुतोषः
समन्ततस्त्राणकरः सुहृद्धि ।
वरीयते दोषमसच्चरित्रात्
रसायनं मानवमानसस्य ।५।

एकान्तवासेन न जीविताशा
मनो हि वाध्यं कुरुते समाजे ।
सदागमं मित्रसहं सहर्षं
नियामकस्यानुगतो वरीयः ।६।

न लोभमूलं हृदयालुसंघौ
जनः प्रशस्तः जगतीतले सः ।
स्वतंत्रभोगैः क्रमते सुखानि
वंशवदोऽन्यः भवतीश्वरणाम् ।७।

शुभस्य वाञ्छा मनसः प्रभावै-
रुत्पद्य धर्मं सुगतिं तनोति ।
मनुष्यजन्मा ससुखं स्वभावं
विहाय चैतन्यमयो सदर्थं: ।८।

सदागते ! किं भवता सनाथी-
कृतः सुमित्रागमनेन कायः ।
किं वा हतोऽस्तीक्षणवैमनस्यैः
गच्छाशुग ! त्वं त्वरितं तरंगैः ।९।

नगाश्चलन्तु जनतोपकारैः
पुण्यं विना नैव विवर्धनं द्राक् ।
गतिः समासादयते पदानि
धर्मोहि यस्यास्ति स मानवश्च ।१०।

हे सिंहवर्ग ! त्वयि शासतीयं
जाता समस्या समसाधनेन ।
राज्यं प्रजार्थं गदितं वरिष्ठैः
किं पालनीयो नियमोऽद्वितीयः ।११।

हे चातक ! क्वास्ति तवप्रियोऽयं
यो मित्रवर्गं तुदति ममेमम् ।
सुहृत्समागम्य सहासमद्य
युष्मान् प्रियाभावनिवेदिताऽहम् ।१२।

आवाहनीयोऽस्ति वलाहकोऽद्य
त्वया विलासाय वनेऽसहाये ।
अस्मान् प्रति स्वातितरो भवेत् सः
कदाऽनुस्यूते समये भजामः ।१३।

नक्तं दिवा ये श्रममाचरन्ति
तेषां यशः शेषजनाः निरर्थाः ।
अतो यशोकायमहात्मभाग्यो
नियंत्रकः नश्वरतानिकाये ।१४।

स्वभावदानार्द्रमनाः सुरेशाः
भयं विहायातिविकासयुक्ताः ।
चिराय येऽत्रोपनिषद् समेत्य
वसन्ति सत्याधिपभावभाराः ।१५।

एकान्ततांगीकृतनव्यशिष्यः
विचारचर्यः स्वधने विलीनः ।
स्मागतः सेवकवर्गसाम्यः
गुरुर्यमाप्नो त निजातिरेकैः ।१६।

सुखानुहारां ललितामयीं तां
पदांकितां प्राप्य न कः प्रसन्नः ।
तस्याः सुशिक्षां दिशते तपोभिः
गुणवतसेन शुभाय किं किम ।१७।

क्ष्यालुंतायाः कृतिरस्त्यनन्ता
न वर्णनीयो महिमा गुरूणाम् ।
संरक्षकाश्च्छात्रजनस्य यत्र
तत्रास्ति पुण्यं कविभिर्परोक्षम् ।१८।

विकालकाले न तुरायमाणाः
विवर्तनीया इव मार्गतृष्णाः ।
त्वरा न कार्या यदि कालशेषः
कृते विरामे न कदापि सह्यम् ।१९।

पतंगमायाः किमिहास्त्यलिक्यं
यदा न काले क्रियते सुविज्ञः ।
सतां सुतोषस्तुलितो धनेन
प्रमाणयन्तां न मनोरथान्हि ।२०।

कलाशयास्ते तरलाधिताश्याः
प्रवक्रुमेकं नियमेन चोचु ।
सुशीलशान्त्या विनयावनम्रो
वचोऽभिधातुं स्वपदं जहार ।२१।

भियापभानस्य विशुद्धगुर्वीं
सरस्वतीं श्रोत्रसुखं वितन्वन् ।
गदापवादाद् विगतां म्रदिम्नैः
स्वरूपतस्तत्र मुखे युयोज ।२२।

धरां स्वपङ्क्यामतिभारयिष्यन्
विहाय वक्रत्वमनिन्दितात्मा ।
इतस्ततो दृष्टिविकुञ्चनेन
प्रथासमारादु क्षणमापयित्वा ।२३।

प्रणम्य सभ्यं स्वमतोऽभिरामं
कुटिव्रजं देवरतं सभार्यम् ।
सुलापकं भक्तिभरैः स्फुरन्तं
प्ररुद्धमोष्ठं शिरसा नतोऽसौ ।२४।

महाशयापार्जितकीर्तिगानं
वियुक्तमित्रो मिलनाय तर्षः ।
दिशः सहर्षं स्वमुखोद्भवास्ताः
वचोऽभिधायादिशतुप्रभावै ।२५।

यथा प्रयुक्तो वटुको विवक्षुः
ललायितः प्रीतिगुणो बलीयः ।
भवान् सदाहैर्भ्रमपारहेतु-
र्ममापिरोमाञ्चमपूर्वमाशे ।२६।

भवादृशो जन्मफलाप्तधन्यः
सुदर्शनं भाग्यवतां तनोति ।
किमस्ति नाप्यं यदि सौहृदेन
विधानवासिनिकषासतांयः ।२७।

यता विमनाः भ्रमिताः सदर्थाः
समुद्गतेनाधिकधन्ययोग्याः ।
मुनिर्द्धिमग्नः कोऽन्यजनो विहाय
मुनिं वनावासकरं कविज्ञम् ।२८।

समागता साध्वनुमावदाते-
विवेकसिन्धुं सुबलारताः स्मः ।
विधाय वाक्संयममास्तिकेन
जितेन्द्रियं वाक्यविशेषं ।२९।

अयं हि प्रश्नो यदि तोषरम्यो
ममोपकाराय विवेचनीयम्
असत्यहीनं सुहृदाभिजात्यम्
तदुत्तरं सारतरं श्रुणुत्वम् ।३०।

श्रमं विनेतुं लघुयत्नकोटिः
समंजितश्चैत्यकृतज्ञताभिः ।
कपर्दिकातो महिमा प्रमेयो
मदीयबुद्ध्या जटिलादगम्यः ।३१।

विधेर्विधानं समयानुसारं
विधेतुमिच्छा मुखरीकरोति ।
भवादृशां संगतमातनोति
तपोवने कष्टसहां तपस्याम् ।३२।

इलाधिदेवं समुपेन्द्रवज्रो
दिवि स्थितः प्राप्य गुरोः प्रभुत्वम् ।
तदन्तरे संविहरन्ति देवाः
तदाश्रमेऽहं निवमामि तात ।३३।

समीहितार्थं यशसां प्रमाणं
विदूरनिर्दिष्टपथं विहर्तुम् ।
प्रियान् समातृन् धृतिमेत्य दीप्ताः
तवांगणे गौरवमाप्तुकामाः ।३४।

विहाय गेहं सुजनान्वितं तत्
समागताः शास्त्रमलं विधातुम् ।
गुरोः कृपाभोजनसाधनेन
विजृम्भताः भूमितलाधिवासाः ।३५।

तपस्विपूर्वाचरिते निरुध्य
तनोर्नचिन्त्यां विदधाति मानी ।
नियोगिसौम्यं विमलं मनोभिः
कदम्बकं धारयतीह केतुम् ।३६।

गुणान् विमुच्यापि जवेन भान्ति
सुमित्रसार्थाः समयेन सिद्धाः
त्यजन्ति सूत्रं न परं कुकाले
सुहृद् विना का शरदिन्दुशोभा ।३७।

अतिद्वयं मोहननामकीर्तनं
सदक्षरं याति मनःसुकेषाम् ।
समुत्सुकं नैव विपर्ययेऽपि
त्रिलोचनाक्रान्तजनिर्मृषाकम् ।३८।

कलेवरे पोषणजापराधैः
परान् विहायैव वयं विभेमः ।
धर्मादुपोद्घातमये समाजे
विलज्जयन्तोऽमयतातिरिक्ताः ।३९।

इह स्थितानां तनुधारिभावः
विधाय मायां निखिलोत्तमाः याः ।
स्वयं न संगृह्य महाजनानां
सुखाय भागान् सुमुखीकरोति ।४०।

ललामसूक्ति गुरवे निवेद्य
सभाजनाः प्रेमगुणोद्विकर्षैः
परीक्षितः प्राप्य समुन्नतिं ते
विधापिताः कार्यकृतिं दिनस्य ।४१।

वहिर्गतः व्यक्तपरिग्रहोऽहं
कृपां सुलब्ध्वाधिकरोमि तूरम् ।
प्रसंगभूते सुजनेन याति
न निष्फलं कार्यमहोसुकर्त्तुः ।४२।

सदिच्छया निःसृतवाक्यबन्धं
मुनिः समाकर्ण्य सुहृत् स्वभावैः ।
विलायिताश्चर्यमुखागतां तां
सरस्वतीं सावसरं जगाद ।४३।

तथात्वमाप्येक्षणिकानुकूलं
घनिण्ठघाते चितितन्त्रवादौ ।
गुरुं समेत्याक्षरवाक्स्मरन्तौ
परं परार्थाय समन्वयन्ताम् ।४४।

क्षमाशिषं तं सविधेऽभिनन्द्यं
निशम्य सानन्दमतौऽतिमन्द्रम् ।
समागमेनात्र विलासबिद्याः
व्यवस्थितिं मृग्यति मांगलिक्याम् ।४५।

मुनेः सदुक्तं प्रभयानुलिप्तं
सुरम्यकर्णात् प्रणयावनम्रः ।
कृतास्पदं गन्तुमनाः विविक्ते
वलीयभव्यं त्वरितं वभूव ।४६।

तदानुभावेन मुनेः परार्थी
विभानुकूलां स्थितिमाप तस्मिन् ।
तदा स संस्कारवलेन भेजे
सुर्दिमलतां सन्निधिमात्रजाते ।४७।

पुना रसन्तः सुवलं तपोभिः
परिश्रमं विप्रसमं विगाह्य ।
तुरन्तमीयुर्गहनं वनं ते
मनोरथक्षेत्रबिक्रस्वरेण ।४८।

तिरोहिते रश्मिमतोऽश्वशक्तेः
वनोदयं भाग्यबलेन लब्धाः ।
महाहवे मुक्तिपदे पुराणा–
दतींन्द्रियं कर्मं कथञ्चिदाप्य ।४९।

शिवप्रसादाभरणं विचित्रं
रविः स्वतेजः कृतिभिः प्रशान्तः ।
तमोनिदानं चरमंगतस्य
सुरम्यसंध्यास्थितिगम्यशोभम् ।५०।

प्रभासमाणो रविमण्डलो गां
परोपकारे तनुमर्पयित्वा ।
अनन्तदीर्घां सुरदैत्यदीर्घां
विना श्रमेणेरयते जगन्ति ।५१।

न याति रात्रिर्दिवसागतेऽपि
सुजातशोभा भुवने नवीना ।
श्रमं विहातुं शिथिलांगचित्ताः
स्वप्नंभुजः संयममाचरन्ति ।५२।

प्रवासभारापगमेन दुःखं
प्रणष्टमासीज्जनतावरस्य ।
विरुढशोभानलदग्धसाध्या
जनागमेनात्र पुनः पुपोष ।५३।

विनष्टलोकाः शयनं विधाय
गतान्तकाले विधिवद्व्युदासाः
पुनः प्रबुद्धाः सुधिया निकेते
शनैः शनैः गोचरतामवापुः ।५४।

अनन्तकाला रजनी समाप्ता
मुदापरं मेलनमाशुजातम् ।
निशातदुःखं श्रितभूतकालं
हृदि प्रदाहं कुरुते अनुवारंम् ।५५।

मिथः सुदाम्नोऽवसरेषुकृष्णः
विगुह्य वक्षो विरल विदेहम् ।
स्वनेत्रदुःख बहिराकृतञ्च
नितान्त शान्तिर्न हि मानसेषु ।५६।

अमीमिलित्वा विजने क्षुधार्ताः
कथानकंसार मयाकुलान्ताः ।
सुसाधुवर्गान् हृदये नमन्तो
दिशं विजग्मुस्त्वरितं विरक्ता ।५७।

अनर्घपारा समवेतसाक्षी
निजानुरूपां पदविंविधन्ते ।
ततः सुसारं परमेच्छया यः
स्वतंत्रता सर्वपदं निरुक्तम् ।५८।

घृताधरैर्हर्षमनोभरैस्तैः
सहैव घोरावनिकांक्रमेण ।
ददर्शसाधोर्वसतिं पवित्रां
श्रमेण नानानरवदनीयाम् ।५९।

विवर्तनीयोऽतिथिस्तां विहाय
कदा सुकालोऽयमनन्तरूपे ।
इतीव मत्वा मनसः सदिच्छा
तनोति नृत्यं शुभतांगतेना ।६०।

कलिः कलाया प्रतिबन्धकः किं
विचारकार्यं न समैति नित्यम ।
पुनश्च पृच्छां कुरुते तरस्वी
कलां विना किञ्चिदसाध्यमस्ति ।६१।

विधीप्सितं ज्ञातुमनर्हतास्मिन्
न विद्धि लोके स्थिरसाश्रयेण ।
मनः समीपं परिवर्तनाय
जनो न कस्तिष्ठति भावमग्नः ।६२।

जिघत्सते मानवमन्दिरेभ्यः
घृणासु सर्पः प्रभुताग्रगामी ।
कथं सुरक्षा भविता समक्षं
परस्परं दूरगतः स्वभावः ।६३।

विवेकिनः स्वार्थकृतिं विहाय
परार्थहेतोः समयान् नयन्ति ।
यशस्विनोये नृपमाश्रितास्ते
स्वजन्मधन्यां धरणिं विधाय ।६४।

पयस्विनी यच्छति सौख्यसारं
जनैः सुपूज्या भृतभावनाभिः ।
कृतज्ञता दिव्यति जीवनान्तं
श्रमाप्तिहेतोः शरणगताय ।६५।

घुणाक्षरेणाप्तसुखोपहारो
जनो न चेष्टां कुरुते परार्थं ।
समुत्सुकानां मनुजाधमानां
दर्पः प्रपाते पतनाय हेतु ।६६।

समस्यया पीडितमानवोऽयं
मनीषितां मे समयं ददातु ।
उपायमास्थाय कमर्थसाध्यं
विचारको नन्दयतु स्वगानैः ।६७।

विशेषणं कंकणतानुराधि
विशेषसन्निध्यमयो विलक्ष्यः ।
प्रकाश कंकालं गतिः हविष्या
मनुष्यभावेन सदा विजेयः ।६८।

सेवाव्रतं पुष्पसहायताभि-
मनो मदीयं द्विविधं गतं किमे ।
न लोककल्याणकरास्ति शक्ति-
र्जंनिर्मता मे विकलंगतेव ।६९।

नमोऽस्तु कर्मांगविचेष्टिताय
सुशीलता येन मयाविवृत्ता ।
ततोऽस्मि धन्यास्पदगौरवेण
परोसतोऽसंजय भाजनाय ।७०।

पदातिरेवात्र वयो वनेऽस्मिन्
नदीस्तृषायाः न विराममेति ।
भूये चलद्वायुमहाप्रपाते
कुटम्बिनो दूरगतः सशुना ।७१।

विमुग्धतां सान्तरमानवानां
विलोकयन् हर्षभरोऽभिजातः ।
सरागगीतिं श्रवणानुपेयां
पिबन् समीरं समयं नयन् सः ।७२।

मतिर्गतिर्मे सुलभा सतां च
सदा तपः सिद्धदयोत्तरेण ।
मह्यं महात्मन् प्रथितागमेन
न किं कृताशा वरदायिकाऽस्ति ।७३।

विचेष्टमाना प्रमदार्तिलोका
तृषाकुलं कारयतेऽतिमात्रम् ।
विभिन्नधाराधृतमानवेऽस्मिन्
विचारणीयं जगतोऽर्थजालम् ।७४।

ग्रहैर्गृहीतौ सदयैव पारं
गतो विरामं लभतेऽक्रमेण ।
विधेर्गतिं तां हृदये स्थितां मे
मनः शरण्यं कुरुते भयेन ।७५।

समाजशास्त्रं मनुते मनुष्यः
परोपकाराद् वहिरस्ति नान्यत् ।
पलायमानः जनताः सभासु
प्रबुध्यमानाः विचरन्ति सद्यः ।७६।

मनोहरोऽयं कविताञ्जलिश्चं
समीपवर्ती सुजनश्च धन्यः ।
निरन्तरं पुष्पमयीं विभूति-
र्वसन्त भासा प्रकृतिः सुरभ्या ।७७।

स्पृहा समस्ताऽभ्रमयी विभाति
विजित्य तां को न विकासमानः ।
अहं सुविद्याचरणें नियुक्तो
विभूतिभिन्नं हृदयं धरामि ।७८।

अमानुषं कार्यमसाधनीयं
क्षणस्यमूल्यं नहि विस्मरेण्यम् ।
नरोऽन्यथा नाशमुपैति सद्यो
वशिष्ठशापेन सुदासराज्यम् ।७९।

मुहूर्तमात्रं जगतां नियन्तुः
चरित्रगाथा श्रवणेऽभयार्थम् ।
समे समासादयतेऽचिरेण
विलासता किं ददते वद त्वम् ।८०।

वचः सतां लोक सुखान् ददाति
तदत्र सारं बिबुधाभिनन्द्यम् ।
कनीयसा भावबिलासनेन
प्रियाविमोहाकुलताविजाता ।८१।

सखी प्रिया दुःखविदांशमात्रा
ममत्वगर्तात् तरणिः कथं नु ।
कुतूहली मे हृदयार्थभावः
सतां शरण्यः परितो गतोऽस्ति ।८२।

स्तनावनम्रा प्रमदा मदाय
विभूषणेनातिगता समस्ता ।
अलं पवरित्यागरयेण सद्यः
शुभेतिविद्या निखिलातिरिक्ता ।८३।

अलोकलोकाः वपुषोऽभिमानैः
समर्पयन्तीह यमाय सर्वम् ।
नवानि कार्याणि पुराकृतानि
हृदि प्रदाहं जनयन्तिनित्यम् ।८४।

अशेषभावाश्रयताधिरेखः
छेकानुषेकैः मुदिताः रमन्ते ।
विधानतः कस्य विधेयमन्तेः
स्वयं परित्यागपुरसरञ्च ।८५।

श्रुतं विवेक्तुं जनताः वचोभिः
सुखेन रागं शतशो विधाय ।
चरन्ति लोके सदयाः समर्थाः
न कोऽपि पूतोऽपरतांगतोऽतः ।८६।

अधोमुखं याति नदीस्तरंगात्
मनुष्यता स्थैर्यंगता विभाति ।
विहासहेतुः प्रतिबिम्बबिम्बौ
न कश्चिदन्यत्र विराजमानः ।८७।

न साधवः पुत्रकलत्रवन्तः
श्रुताः भवद्भिस्समधौ समाधौ
गरीयसा गत्रि [illegible] समाखरः
करोति विज्ञोनकिमर्थं कार्यम् ।८८।

अनेकशः पुष्पपरागमत्ताः
भ्रमन्ति भूयो भ्रमराः सहेलम् ।
अकिञ्चनास्ते जलसस्थिताश्च
वकाः नियुक्ताः प्रतिभासितं [illegible] ।८९।

समन्ततोऽन्तः करणानुभूत्या
मुखारविन्देन मधूनपिबन्त्यः ।
रसं रसाधिष्ठितनागराजं
विडम्बयन्त्यो रुचिरंविभान्ति ।९०।

तुलावलम्बं तनुते जनेषु
दयालुता मुग्धवधूसुरम्या ।
विनोदनार्थं गदितैर्वचोभिः
मनोरमन्तः पशवश्चरन्ति ।९१।

समृद्धलोकाः शिवसन्निरुद्धाः
हसन्ति दुःखे परिणामभाजः ।
वयं कदा यन्त्रभयाद्विमुक्ताः
स्वभावमात्रे भवितुं समर्थाः ।९२।

बिलासभावानगतार्थंहासः
प्रमादमत्तेन मधौ श्रुतोऽयम् ।
विनेयजीवान्तरभावनायां
गुणीकृतो भावनिवारितोऽपि ।९३।

असंयताद्रीकृतवालजालाः
कुतूहलाविस्कृतजालभावाः
स्खलद्गतिं ताः प्रतिभानवन्त्यः
कलाय कल्पे प्रगुणीभवन्ति ।९४।

निजाक्षरैः टंकितपर्वतेषु
पुरोवितत्यं पठने समर्थः
सुदामसंगेस्थितबालकास्ते
विचिन्तयन्तोविविधावतारम् ।९५।

विवर्धितापंकभरान् तटाके
विशेषशोभामयपंकजंतत् ।
मदाधिवासेनविकर्षयत् ताः
परम्परासूच्यतमाः समस्याः ।९६।

निवारणायाशु पशून् खगादीन्
विनिर्मिता मानवकल्पमूर्तिः ।
पथिस्थितानामनुमोदयन्ती
प्रहर्षरागं जनयद्विभाति ।९७।

निवेदनं गोपबधूत्तमानां
क्षणस्थितास्ते परिपालयन्तः ।
गभस्तिमन्तं प्रणमद्विबर्ता–
ममोघकान्ति परिलेभिरे किम् ।९८।

शिलीघ्रसंगो मधुरः परागः
सरोवरे गन्धमयं करोति ।
अधत्त शुद्धि जलजातवर्गः
जलं न केषां परिसेवनाय ।९९।

समयपरिणति भावैः समुत्थाममूल्यां
करुणभरविमग्नाः शाद्वलोद्यानमाप्य ।
सपदि मुनिसहाय्याः धारणं तद्विधाय
समनियतसुमानैस्मौनधीरं ददर्श ।१००।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये मुनिदर्शननामा पञ्चमः सर्गः समाप्तः ।

# ॥ षष्ठः सर्गः ॥

प्रकृतिसौम्यतनुः प्रतिभातियो
मनसि चेतनता स्फुटिता नवा ।
दहति नित्यमसारविहारकं
किमपि मेदमना न सुसुप्तिगः ।१।

दिनकरस्य कृतिः वहुशोषिका
मुनिविभात्रभवेन मितामिता ।
स्वयमनेकगुणं परिहृत्य सन्
तपति तद्गहने भवभावुकः ।२।

अधमकामकलेवरनिग्रहे
शशिरुचो रुचिरो सुरभिप्रदः ।
परिददाति निबन्धितशान्त्वनां
अनलदाहसमोऽपि तमच्छिदः ।३।

वचसि संयममञ्जुभरां क्षमां
सदसि भक्तिमतां प्रथमां कनम् ।
समधिगम्य सकाममनश्चलं
विपदि चालयते स्वरुचा दिशि ।४।

त्यजतिहानिविनाशिनी मानसं
मतिरगाधमयी प्रभवा चला ।
सदसदात्मक भावविभेदिका
द्रुतविलम्बितता सुसतां रहः ।५।

निहित मानवती न महौषधिः
मधुनिकेतवती न विहंगमा ।
विषमधारवहन्न सरिद्गणः
श्रमणगानपरो न विकल्मषः ।६।

सरसिजं धरणीधृतचामरं
शशधरस्य करेणविताडितम् ।
श्रयति गंधवती गलितशयः
प्रहरतोऽपि परार्थगतिर्भवे ।७।

चपलचन्दनगन्धमयी शनैः
प्रशमसंगमना समनोरमा ।
वहति शिप्रनदीशुभ वारिभिः
समभिगम्य सुधासरसानिलैः ।८।

सकलहिंस्रगणैः शकलीकृता
शकलशत्रुजनस्य विभावना ।
सरसभाववभरैर्वनभोजनै-
र्लसति मण्डलितं प्रथितंयशः ।९।

विनयपारिधितोयनिमज्जने ।
पटुतमो महतः परिशिक्षितः ।
गुणमणिं विधिना पणितुं ततं
त्रिगुणशैकृतपूरितसंघतः ।१०।

वसुमतां रणितं परिशुध्ययः
उपदिशन् रचनाहितकाम्यया ।
सकलशास्त्रचरो वशिनांगुरुः
कलयते ललितां सकलां कलाम् ।११।

कृतयथोचितवेदसमागमः
परिहरन् विषयान् समुपस्थितान् ।
निखिलमानसशोधनतत्परः
भ्रमति साधुचयेन सुसेवितः ।१२।

अभिनवे शरदागमने शुभे
परमहंसगणेन समन्वितः ।
सुखकरीं भवमुक्तिविधायिकां
श्रयति शंकरशासितभूमिकाम् ।१३।

मधुरिमा मनसोन समायते
नवलतां परिधाय समन्ततः
जनगणः कुरुते विततं वृथा
नियतिमात्मगतिं प्रविधाय ताम् ।१४।

स्पृशति कश्चन भावसमाहितं
करुणरुग्णमनः पथिकान्तकम् ।
स्थितिकरी मुनिसंस्थितरोचिका
कुसुमिता वनमध्यगतानता ।१५।

जलधरावलिकान्तिविसारिभिः
तरुगणैः सुषमैः वनवासिभिः ।
मधुकरांगभवं मधुरासवं
स्वदयते स्म समागतवैभवः ।१६।

सवनकर्मपराः ऋषयो भवे
सकलबुद्धिगुणः शुभलाभदाः ।
भवति देहवतां प्रचुरं धनं
पवनवेगसहा पबिराजता ।१७।

बलविवेकवशीकृतगौरवः
गिरिशतां परिचिन्तयते व्रतैः ।
मृजितबुद्धिममन्यविभाविणीं
विततताम्तहृदां सरसायते ।१८।

जलनिधाववगाह्यमनन्तकं
हिमधरञ्च विलंघ्य तपोवलैः ।
मितिसमर्चनदेववरोपमः
श्रुतिविधिः सुगतोऽपि विनायकः ।१९।

कुलपतेः पदको न बहिर्मुखः
स्थविरकोवयसा न जरान्वितः ।
सहजसाम्यमुखो न वचाटको–
ऽधिकभयंकरणो न भयंकरः ।२०।

जितिवतां समुपाश्रयहेतवः
सुसमयेऽजितकार्यसुकारिणः ।
त्रिकफलः प्रितः कलिताः मुहुः
निखिललोकजनैरनुरागिणः ।२१।

सरसलास्यशतैः सहसा रतिं
मनसिधारयते सहसोद्भवाम् ।
सुरहितस्य सदा कुरुते धियं
परसरीतिश्रियं प्रतिभाति या ।२२।

शिशिरलेप कृतावशमानसः
शशधरेण चतुर्गुणताकलः ।
प्रतिजहार गुणान् जगतोऽकुशान्

बलवती प्रमदा गुणसंमदा
कृतवशा जननीव सदा स्मृता ।
वसति या मनसोऽणुगता तया
न ममथे धिषणां वरदाश्रिताम् ।२४।

अचलचञ्चलभेदकरं मनः
मततटस्थमिवातिगतं परम् ।
प्रकृतिमाहृत ईश्वरतः पृथक्
पुनरसर्गजले शतसर्गकः ।२५।

अनुवने वशतिञ्च चकार सः
परिहरन् परितोऽघमयं जगत ।
क्षणिकदेहिजनेषु न चेषणा
जनयते विरतिं दरदर्शनैः ।२६।

अवसितं व्रततौ शयितं क्षितिः
दववनं समिदग्निसनातनम् ।
अशनमेकपदे विविधैः फलैः
जनकनीतिरनेकतरा मितिः ।२७।

सुरगुरोर्बहुशश्चिरकालतो
नयनसुन्दरतापरिमर्शितः ।
अजरदेवगणैर्न हृतास्पदो
न महनीयजनो बहु मिच्छति ।२८।

भुवनभव्यमहोदयशोभनैः
प्रकटितारुणता न मुखे यतः ।
नृपतिमाननिरासनकौशलः
समदयालुहृदा स विराजते ।२९।

नृपगणान् परित: परिशिक्षयन्
नृतनयं नृगशैन्यविचालनम् ।
नृजवपु: परिरक्षणतत्पर:
परिजनैः शुचितागुणभूषण: ।३०।

जवविमत्तमतंगजसंगते–
रिवसमाजपरायितनिश्चल: ।
बिमलतां कलयन् वननिर्झरै:
सदसतां समितौनिरवग्रह: ।३१।

भवविपक्षमयीं विषतुल्यतां
अनुमितोऽक्षमशून्यविलोचन: ।
अकलतत्त्वविलोकनभास्कर:
इति निधाय जनै: परिसेवते ।३२।

विचितवस्तुभिरातनुमर्षण्
सजति कोविदवाचनिकावटे ।
उशनसानयितु परमं नयं
विकटदु:खमहार्णवसयुते ।३३।

सुकृतिभि: शिवताविषकांक्षित:
तपसि किं न सुहस्तगतं वरम् ।
स्फुटतपोवलनाकृतिभि: सदा
शिव इवास्थितवन्यसभापति ।३४।

धृतकरो द्रितटे शुभदेहजे
प्रतिकरोति प्रियांकनिगूहनम् ।
पशुपतेस्तपसा यश आहरन्
स्मरहरेण विराजयते वने ।३५।

मदनमोहनसुन्दरतारतो
भगवतीव्यसनांकुरमारुढ़: ।
मृगकुलेन गत: प्रियमान्यतां
विबुधकर्मसहाय इवोदित: ।३६।

शमविधानवने कृतनिश्चय:
त्यजति मोहदवानलजं शुचम् ।
शमयितुं मनसोऽगुणसंपद
भृगुरिवायमतो मुनिरास्यते ।३७।

अथ सदागममोदकरोत्सव
उद्रितचन्द्रनिभ: धरणीशय: ।
पवनवेगसुकंपितवल्कल:
विजनमध्यसमागमभावित: ।३८।

विरहदुखमदु:खमजानयन्
प्रमदवर्जिततर्जितविग्रह: ।
विकृतिमान्न कदापि विलोकित:
भवभवोऽत्र तप:कुरुते हरि: ।३९।

अविकलेन्द्रियलब्धमहो वने
परिणते वयसीव तपश्चर: ।
करुणशान्तसमेधितगौरवै-
रुधिरुचि: क्रियते बहुलैर्गुणै: ।४०।

अवयवेन पिनाकिपरंतप:
वदनभासपराजितकामद. ।
जठरभारविलुप्तहविश्चर:
वहति वारितपामयचक्षुप: ४१।

परिधिपथ्यसुकेन्द्रमनो मुने-
र्नगसमानधृतासनकं परम् ।
विपिनभैरवभूषितमन्दिरो
दहति योगनवानलसंभवम् ।४२।

शकुनिशिक्षणतत्परमानसा
अभिमुखाः निरवग्रहवाग्मिनः।
प्रचुरपुण्यपरायणदर्शनाः
सुहृदयाश्च वसन्ति सदानुगाः ।४३।

परिहृतार्तिविरागभवालसः
पशुपतिः प्रियया शिवया सह ।
स्रवति नो बहुमाननिरादरे
स्थितसमीपमिव स्थिरभाषिता ।४४।

सुविमलं भवसर्ग समीक्षया
सततमागमनिश्चयवचः ।
सबिधबाधकरी महनीयता
जनमनो रमणीयमदा नहि ।४५।

अनुकृतिश्च सहेतुकतामयी
कथयतां क्व विभाति महामती ।
विधुमयी जगती तमसा विला
गृहरतस्यवने वसतिः कथम् ।४६।

अगिरमानपरो महनीयतो
ग्रहणकारणमानसभास्करः ।
प्रकरणे भवसागरमागतः
नवगतागदतत्वविशारदः ।४७।

किमु सहायकता जगतीतले
सकललोकगणे प्रतिभाति या ।
सहजमूर्तिमयी हि विराजते
प्रशमहेतुकता सुतपस्विसु ।४८।

नगरभूत्रिमतां परिहाय सा
नुदितमाणवकान् वनमाश्रयान् ।
विषयभोगविरक्तिविदायिनी
मिहिरभाजनता नहि संशयः ।४९।

बुधगणैः परिपूजयते हि यो
निवसतिव्रततिर्नितरा तता ।
व्यवहितं न सुहस्तगतं परं
नियमकारणकार्यसहोऽणिमा ।५०।

अयि महाजनते ! विषमे कथं
कलिमले वससि स्थिरतामये ।
उपचिते तपसाहृतमानसे
सुखमयी भव सात्विकभावदे ।५१

न तपसो गुणभेदभयंकरो
नरसमाजपरायणगर्धनः ।
सुकुरुते कुलकः पुलकञ्चितः
फलति भूरिसुबासकरी मति ।५२।

शमविधानकरः सवितेव सः
किरति कीर्तिमनन्तविकारतः ।
प्रकृतिमानवतुल्यविचारण—
व्यवसितो न समीहयते हृदि ।५३।

सुवनमेत्य मुनिः बदरीफलैः
गमयते समयं परहेतवे ।
सुतमसा तरवो नियतात्मनः
प्रतिदिशामधिपेन सुसेविताः ।५४।

अनुभवं कुरुते शितकेशवः
निखिललोकजनः जरसान्वितः ।
भवसमुद्रतरिं भवभाजनं
प्रवदतेऽधिकचैत्यकरं स्वनम् ।५५।

पथि विलासमय पथिकांगना
तरुगणे विहगावलिगुञ्जनम् ।
पयसि भातितमां जलजावनौ
मुनिकुटिर्नगरीव तपोवने ।५६।

कुवलयं लघुपादपवल्कलैः
विदधतेऽतितरं रुचिरावृतम् ।
मदविमानकरं नगराजितं
परिभवं ददते न कदाचन ।५७।

अतिदयालुसनातनशालिनः
जनितसुस्थिरपाठविचारकाः ।
ऋषिमगुः समदर्शिमहाजनाः
विनयवेदनदक्षमहोदयाः ।५८।

तपसि लीनहृद गुरुमेत्य ते
कृतयथोचितकर्मविमानिनः ।
उपदिदिक्षु गुरुं प्रविचार्य दिश्–
यभिमुख धृतमानससुस्थिताः ।५९।

भ्रमरमारणगन्धमदन्धका:
परभृतो विरुतेन सभागतिम् ।
अहरहो वनदावभरेऽवरे
मधुमयेशरणेवितरन्ति ते ।६०।

तरलतालतया परिरक्षणे
पथिकमाननिरादरकारिणी ।
स्फुटविहासरसालसहेलया
जनमनोऽनुगमासवतत्परम् ।६१।

रहयितुं सुजनाननसौरभ
सुमनसंहतिरत्र विराजते ।
महिमनीशगणान्नतिशायिनी
शुचिपरा रुचिरेण पुनाति सा ।६२।

सेतुसमामितर गपरागतो
नियमिता भ्रमराकुलदेवता ।
स्फुटतरं पारभावयतां सदा
बलवतामबलां तनुतेऽधिकम् ।६३।

अतुलभक्तिभरां स्तुतिपद्धतिं
रचयतो दिवसाः रुचिरामला ।
अपचितिं ददते नितरां सतां
शमकरीं भुवनस्थितिधारिणीम् ।६४।

स्वयमहो पवनेरितपुष्पतः
परिमलग्रहणेऽनुगतश्चिरम ।
परिसरे निवसन्नपि भावुको
भ्रमरतां दधतेऽनुमतो मतः ।६५।

मदभरा रजनी विमला चला
सरभसं सरितः पुलिनागता ।
बहुलपक्षचरा गिरिजानता
किमबलां तुदतेऽधिकभावना ।६६।

चरणतः कुसुमं द्रवितांशतो
रसमयं कुरुतेऽवशतांगतम् ।
अपनयेऽधिकदूरगतिं तताम्
अनुरवंरवितोऽपि भयान्वितम् ।६७।

गुरुजनैः प्रतिभानतसंपदो
मणिमयाः कुटिरेषु समस्थिताः
सलिलमातुरतां परिकल्पने
पटुतमाः विचरन्ति प्रसारिताः ।६८।

विविधभावभरोत्सवमोदनैः
प्रकृतयो दिवसे हृतमानसाः ।
अकरणी रममाणरसान्विताः
प्रलयजालवशः कलसीकृता ।६९।

गगनचन्द्रमसः प्रभयान्विता
न जगतः सुखहेतुविनाशता ।
विततमेघगणांगविभावरी
श्वसनगानपरैश्च विलोकिता ।७०।

स्फुरदतीतदिनस्य विभावनं
सरयदेवजनस्य हृदः स्थितम् ।
तृषितसौख्यसमापनचातुरीं
भवति लोचनयोश्चरतागताम् ।७१।

करमलीमसभावभरालसैः
न वशतां शुचितापहरांगतः ।
मुनिजनः सदयाननसुन्दरो
वितरति स्फितदर्शितभावनाम् ।७२।

त्रिभुवनेऽभिनये चतुरो जनः
तमभिनम्यमुनिं समुपासते ।
मधुरतां वितरन्ति सहाशयाः
प्रकटितामृतर श्मविषादता ।७३।

लसितनिर्भयता रमते सदा
वनगतापिः विलासपरायणा ।
मुनिरमः निकषा निकुराचिताः
परिचरन्ति मुदाहृदयाशतः ।७४।

सहचरमनसां प्रास्थानिकाशां निशम्य
सुकृतसमतया तौ बालौ सुयोग्यौ गृहाय ।
श्रुतसमुदयशान्त गौरवेणातिनम्रौ
उपदिशति सहर्षं पाकयुक्तांसुनीतिम् ।७५।

# ।। सप्तमः सर्गः ।।

किल्बिषी भयमाप्नोति
येन तृणं द्रुमायते ।
नमस्तस्मै तमोधात्रे
येन धर्मोऽभिजायते ।१।

वन्दनं चंदनं शान्तिः
काव्यधारा बलांगमः ।
सत्या विद्या सुवेदेन
खलसंगेन दुर्मतिः ।२।

अधिष्ठितेन्द्रियस्यात्मा
ज्ञानाकारस्य नामिनः ।
परमात्म पराकाष्ठम्
गच्छति पदमव्ययम् ।३।

सूर्यकिरणमासाद्य
ताराः सर्वाः लयंगताः ।
तेन सल्लपितस्याग्रे–
ऽसत्यस्याभा विहीयते ।४।

सुधांशोः शोभयाम्भोज
कुमेधया च संपतिः ।
भक्ती रहित विश्वासा
निम्नावस्थां विजायते ।५।

मान्यानां सेवया लक्ष्मीः
श्रेयस्याप्यां सुकर्मभिः ।
भार्यया गृह सत्सेवा
भक्त्यामुक्तिः परं स्थितिः ।६।

भोगो रोगसमा लम्बः
वृद्धि ह्रासिमनोरथा ।
ब्योम्नि वृथा पयौ शोधः
साधोरसेवकैः सुखम् ।७।

आलोक्य स्वसमासार्थी
पृष्ट्वा परिजनान् वरान् ।
शुभकार्यं कुरु त्यक्त्वा
चित्तविभ्रमसाध्वसम् ।८।

कुलं कालं गतिं ज्ञात्वा
सर्वैर्लोकैऽपि मीयते ।
ईशं विहाय सानाथः
केन क्षितौ सुरक्षयेत् ।९।

कर्मपूर्वार्जितं लोके
भाग्यं श्रेष्ठमक्षयम ।
सदुद्गारो समारम्भ ।
समीहयाविजायते ।१०।

व्यक्ताव्यक्तयोर्योगं
विद्वद्भिर्ब्रह्म कथ्यते ।
निर्गुणस्वगतिस्तस्य
स्वतंत्रश्च परात्परम् ।११।

आत्मामरीकृतं लब्वा
शरीरमन्यमाप्यते ।
त्यक्तनश्वर देहस्य
पुष्पसुरभिवातवत् ।१२।

जय: प्रहेलिका जीव:
समाधानं मतेर्बलै. ।
अनन्ता: हि समस्यास्ता:
अतो दु:खमयं जगत् ।१३।

कुरुते यो यथा लोके
भावी तेनैव जायते ।
तेन दु:खसुखेन मुक्ति:
संप्राप्यन्तेऽनुजीविभि: ।१४।

विधिना पापकर्त्तार:
प्राप्नुवन्ति निराकृतिम् ।
तया दु:खानि चोन्मादं
भूयो मरणदुर्गतिम् ।१५।

पापं सर्वं परित्यज्य
योग: श्रेय उपास्यते ।
सुखं तस्यानुगामीव
इह लोके परत्र च ।१६।

न ब्रह्मा सृजते विश्वं
न रुद्रश्च प्रणाश्यति ।
न विष्णु: फल संयोगं
स्वभावैस्तु विवर्तते ।१७।

दास्यं मूढस्य संलोक्य
प्रमुदिव्यन्ति ये नराः ।
बलिपशुसमं विद्वान्
ग्रीवामारुह्य कर्त्यते ।१८।

पराभवे जयेच्छा सा
समाप्नोति हि तत्क्षणम् ।
त्यक्त्वातो विजयेच्छां स्वां
सेवस्व च निजाः प्रजाः ।१९।

साधुर्न कोऽपि लोकेऽस्मिन्
श्रूयते न च मीयते ।
दृष्ट्वा सर्वे शरीराग्नि
दह्यन्ति दीपकीटवत् ।२०।

विश्वस्मिन् स्वर्थिनो जाताः
सर्वे जीवाश्च साधवः ।
सर्वैर्विधीयते स्वार्थे
संश्लोकः बोधयेच्छया ।२१।

ध्वंसशिष्टं वपुर्ज्ञात्वा
विफलेषु परिश्रमम् ।
चिन्तायां करणीया वाक्
व्यवसायं सुखेषु च ।२२।

परःशतं हि जायते
लोके दुःखसुखेऽधिके ।
समतामेति विद्वान् हि
सर्वत्र सर्वकालजे ।२३।

वन्धो ! बुधसमागामी
जगति भाग्यवान् जनः ।
अतः परस्परं कार्यं
समर्पयन्तु जीवनम् ।२४।

यौक्तिको क्षणिकायासे
पूर्णं कुरु सुकर्मणा ।
सुदुर्लभ समारब्ध-
मसाधारणतां भज ।२५।

विज्ञानं विद्यया श्रेष्ठं
विद्याऽन्यभवकर्मणा ।
ज्ञानेष्वपि च शब्दार्थः
शूक्ष्मः शब्द. प्रकीर्तितः ।२६।

कण्टकः कान्त ! दुःखाय
शोधनं तद् बिधीयताम् ।
भवतां परिहासोऽयं
राज्ञो नाशाय कल्पते ।२७।

शरीरमाश्रितं नित्यं
मनः प्रेरयते मुदा ।
यस्मात् कश्चिन्न दूरेऽस्ति
तत् समीपं समास्तु च ।२८।

रात्रिर्बुद्धिप्रदा बृद्धा
सदृशी शान्तिदायिनी ।
सुसुप्ताः सुजनाः जाताः
दुष्टानाञ्च समुत्सवः ।२९।

सूक्तिसेवां विधायात्र
भावभूतिं तनोति यः ।
अयमालोकसंदेशो
जीवनाय रसायनम् ।३०।

प्रातः कालः सुकार्येषु
प्रेरयति च सत्वरम् ।
धेनुर्यथास्ति संध्येयं
विश्रमप्रतिवेदिनी ।३१।

आर्तौ कल्याणकामीयः
सेवाधर्मपरायणः ।
शूरश्चापि कृतामोदी
परर्थैरारिक्तसाधनः ।३२।

काव्यस्यात्मा रसः शाब्दः
सच्चिदानन्दरूपभाक् ।
मोक्षमार्गसमुन्नेयः
भावनाभावितो हरेः ।३३।

भगवतः पदाम्भोजे
सर्वदालीनमानसः
विद्यायां निपुणस्तस्मै
सर्वं मधुसुधामयम् ।३४।

सवित्री ज्ञानकोशानां
सर्वलोकानुकम्पिनी ।
सरस्वती सुधाकारा
मंगलमातनोतु वः ।३५।

सत्वरं तौ गुरुं प्राप्य
सूर्यमुखाविवासिथतौ ।
गमनाय मतिं नूनम्
कृतवन्तौ गृहामुखम् ।३६।

प्रवृत्तिः सा महद्दुःखं
हृदयाद् गन्तुमेधते ।
शिष्यस्य प्रकृतिः सौम्या
गुरवो देवता समा ।३७।

भवतुसं स्थितिः क्षेमा
वनिता पुत्रवत्सला ।
परिवारजनैः प्रीतिः
मानप्रदा समायतात् ।३८।

शमित विनयदोषः सुष्ठु दैन्याविकारा
परिवृत्तबहुशिष्यं गौरवर्णं मुनीन्द्रम् ।
अभिमुखमभिगम्याधारभारं प्रणम्या-
वसतिममरयानं देवकार्येण युक्तः ।३९।

अविहितदिनसंक्रान्ते गुरोः सन्निधाने
स्थित सकलगुणौ तौ देवमान्यौ तथोक्तौ ।
गमनमुग्धविहारं प्राप्तियोग्यौ वनेऽस्मिन्
कलुषितविरहान्ते याति देही धरायाम् ।४०।

धवलितसुशिरोभिः स्वीकृतादेशमुक्त्वा
स्वरमुखरपरं गन्तुमाशिषं सः प्रपेदे ।
अभिमततरवाक्यं तत्र विद्यातिनम्रः
समफलगुणविप्रः सः प्रसन्नो निशम्य ।४१।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये सदुपदेशनामा सप्तमः सर्गः समाप्तः ।

# ॥ अष्टमः सर्गः ॥

समीपं संमानं सकलमुनिताशीस्कृत मवः
प्रभिन्नं दुःखं तत् सपदि मनसोऽन्तः प्रकृतिदम् ।
गृहारामं भिन्नं हृदि विचरति स्मातिबहुशो
गतो दूरं तावत् तदपि गुरुणा भिन्नहृदयः ।१।

अधीतज्ञानः स व्रजति सहसा भोगजलधिं
विना कामं मार्गे पथिकजनमासत्दसुकरः
रूपं सौम्यं बिभ्रज्जगति प्रस्तोदिव्यतनुभिः
विभावं गृह्यन् तं प्रकृतिजनितं मानसकृतम् ।२।

सती सर्वा शोभा वपनंजनिता संनियमिता
नदीः नीरंस्वच्छं वितरयति साध्वी शिखरिणी
पथि स्थाने स्थाने सुसफलसमृद्धिर्विभविता
इयं भूतिः शम्भोः किमथ धरणी ओंत् सुमनस ।३।

लता वृक्षेभ्योऽतः परिददति संभक्ति विकला
क्विपक्षाक्रामा सा विमलमतिभारं नहिं गता ।
सुदाम्नं सा बाला प्रणयविवशं नौ प्रकुरुते
सलीलं हृत्छोकान् विमलहृदयैः छालितसमा ।४।

तरुः पुष्पैः वाढं नमयति मासाद्य वनेज
सदाचारैर्लोके वितरयति शिक्षां कलयितुम् ।
नरो ज्ञानैः सर्वान् सुखमधिकमापर्वदंदति
परः श्रेष्ठस्तेषां यदि धनिजनाः भान्ति जगति ।५।

क्वचिन्नृत्यं वाद्यं क्वचिदभिनवं गायनकलं
सुगन्धं चित्राणां कलयितगृहं रम्यसुखदम् ।
समस्ताः व्यस्ताः भोजनभजनभावे भ्रमवशा
पुरी प्राप्ते तस्मिन् भवति तरसा गोचरगता ।६।
सुधाधौतागारं गगनपरिणामं विदधते
स्थिता नारी द्वारो नगजरितशोभां प्रकुरुते ।
सुरैः स्पर्धा किं सा त्रिदशनगरी त्रासजनिता
इदं साश्चर्यं यद् जनयति कथं त्यागसहितम् ।७।
गवां स्थाने वामाः सहसमगताः हासकरणे
जनः गोष्ठ यां वादैर्निगमम वगन्तुं न यतते ।
प्रयत्नं जीवानां विभवसुखमन्तर्विगलितं
समाजस्याकृत्यं जगति भवतीति स्वजनितम् ।८।
रुचीनां तद्दोषो रजतनिवये सदम कुरुते
कलायाः वैभिन्यं स्वरचितमभेदास्पदगतम् ।
इतीवास्ते व्यंग्या गुणगणन वैषम्य प्रकृतिः
अतो निन्द्यं श्लाध्यं कविनिगदितं लासमरितम ।९।
सुदामा किं ग्राह्यं तर्हि गुणवदाकृत्यगणितः
कलापारं सारं हृदयमवधायानत मुखः ।
कलाः सर्वास्तत्रासुखविकसिताह्वानरचिताः
अहो ! चैतन्यानां यदि न तपसि स्थानमकृतम् ।१०।
घटः पूर्णः किं वा चलचलनिका चञ्चलमनाः
मनः क्षोभोद्भावं प्रथममिलनं किं जनयते ।
अयं नारीलोकौ लुलितकुसुमं सारसमयं
चल चल शुभ्रे हरिदासितमापाटलतरम् ।११।

नवा वाला खेला हृदयविहृताधारमधिकं
समालिंग्याशान्ता पतिविरहिता कातरमना।
जनैर्मेने प्रान्ते भवनबहिरागन्तुमनसां
स्वभावाः सर्वत्रानुकरणजनिताः भ्रान्तिविषयाः ।१२।

चलिं हित्वा लोके सरसजननीमातुरजनः
शिशोः कालं प्राप्याशुभभयमाहं वितनुते।
यदीत्थं स्वभावं तदनिशसुखां नैव लभते
भवेल्लोके शुष्कायितरहितमानन्दममृतम् ।१३।

नदस्तीरे तारं स्वरविधिविरामं विदधते
पतिं सांगोपांगा नवपरिणयाक्रान्ततरूणी।
समस्ता शोभैषालधयति लयालिंगनविधौ
हृदिस्थो यद्भावः सुजनकथितो नैत्रपुटकैः ।१४।

जले जालैर्मीनं सहचर वयस्का धरति या
शनैर्हास्यं जातं रुदनमभितोऽन्येक्षणभरे।
अनेनास्ते शोभा जलविषममार्द्रांशुकतटा
अहो ! बुद्धिस्तेषां नवतुलिकया वस्तुरचिता ।१५।

वभासे किं बाला जनमनसि सेवानुगमने
सुदामा तद् ग्राह्यं नहि रटति किं पाठकरणे।
किमानन्दो यातो यदि सुहृदयो दर्शनपथे
व्यपेक्षा व्याघातैः शुभरहितभावै.सुरचिता ।१६।

सुवाना. मातुस्तं युवजनमनोभाववलिताः
सुचेलं गृहृणन्तो विशरणगमोकर्मवरणम्।
सुकुर्वन्तीत्यं तं सुलभमनसा हास्यफलिताः
अहो ! शून्यं भाव जगति तरितुं कः ससफलः ।१७।

( १३१ )

विभावं श्रृंगारे वितरयति सा सौम्यप्रकृतिः
विशालैः रक्ताक्षैः रमणवशतो पश्यति लता ।
खगो गेहोत्कण्ठः पथिगमतजं गायनपरः
चकाशे स्वादानं हरिहरगणं भावभजनैः ।१८।
प्रशान्ते मध्याह्ने विचरयतियो भावसवलैः
समुद्रस्यापारे चरमेशकुने दैवत इव ।
विभावाः भूयिष्ठं नहि वसधिकं ज्ञानशरणं
प्रकर्षन्ति मन्द्रं गहनमहिमा गुरुजने ।१९।
विचित्राः सर्पा ये श्वसनसबलैः प्राणहरणे
सुदक्षाः कामं तां प्रहरभयवेगं सुवदने ।
प्रकुर्वन्तीत्थं यत् सहनकरणे कांक्षितबलं
बलानां व्यासश्रंभेयजलनिधिं पारगमनम् ।२०।
सुवर्णानां केन्द्रो विमलमणिशोभां वितनुते
प्रमोदे सुन्दर्यो द्विजकुलकलां कामुकरुचम् ।
१४० प्रभावर्षे सौख्ये गलितवसने सारसमये
समीचीनाःश्लाघा अहहहतो भावमहिमा ।२१।
शकुंतानां सघो विकसित सुमं सेवति बलात्
तरंगैरापूर्यैभिनवमदनैर्गायति जलम् ।
सुसेवन्ते लोकाः रुचिभिरिव धर्मं सुमतिभिः
अलंकारागारं मरकतमयी क्षेत्रधरणिः ।२२।
छविं त्यक्त्वा लोके तिमिरपटलं किरति निशा
उपेत्यावासं सः श्रयति जगतो भूतिनिकरम् ।
१८३। भृशं शोकाग्निं ते चतुरचरणा चारसमया
सहन्ते सदयं किं सरलसरसंभा वसर्षलैः ।२३।

वयस्यास्मिन् लोके कतिपयपदानां रचयिता
मनोभावं मानं शुभविपुललाभंन लभते ।
महोत्साहं संघश्चलितविभवैर्दिव्यसदयैः
विशकः सद्भावं वितरयति संस्थानसुभगः ।२४।

ज्वलन्तं संतापं दिनकरकरैः प्राप्य बहुशः
यदन्तां गन्तुं सः करकिसलयैः रुद्धनयनः ।
विकाराद् संसारं प्रियवचनदानैः प्रणमयन्
वनान्ते संघाते रचयतितरां सद्भवदनम् ।२५।

सुदूरे तद्वापीं सरसरमणीं वीक्ष्य मधुरं
जलं सश्चेष्टाभिर्वनगजमदैर्वासितमहो ।
पिपासां प्राप्यातः शमितहृदयोऽभावजलधिं
परं पारं यातः समयसुबलं ज्ञातसदयः ।२६।

परार्थं यः प्राणान् त्यजति समुदं तस्य जननीं
सुधन्या संसारे प्रणयिनि जने मोहमनसा ।
अतः सर्वं रम्यं स्फटिकमणिसाम्यं विदधते
अमित्राणां त्राणं परमसुलभं लोकसदने ।२७।

नरः सर्वं स्वेच्छाज्वलितमदनाः शान्तिरहिताः
स्वभावैः कुर्वन्नो विषमगतिमासाद्यविरहे ।
समग्रं त्यागं ते कुटिलगतिना लोकसदसि
प्रमेयं कृत्वातो विकलमनसा यान्ति जगतः ।२८।

विशं ज्वालाजालैः सरससुरसायां विनमितं
विरामं संधार्यावधिविरहितं सारसगणम् ।
महात्मानस्तत्राहसितजलजानां सुनिबहे
निशायां [illegible] मानतनयनाः ।२९।

विपर्यासो जातो मनुजमतिभिर्नास्ति सुगतिः
न कर्त्तव्यं सेव्यं भवतिदिवसैर्दंवसबलैः ।
किमास्तिवक्यं लोके यदि न मनसः शुद्ध मणिकम्
यतः काव्ये सारः सदमचरितं रासभरितम् ।३०।

आभाग्यं सौभाग्यं व्रजति महतां रक्तमनसा
यदीय तेषां तज्जयति महिमानं सुधवलं
सुवेशं तेषां तज्जयति महिमान सुधबलं
सुहेतु कर्त्तव्यं विजयविधिना कृत्यवपुषा ।३१।

परिष्कार्यं स्वान्तं परमसुकुमार नु विनयैः
तिरस्कर्तु लोकाः सततगतिभि ख्यातविभवैः ।
अचिन्तस्त्व चिन्तामधिकसमर्थेऽक्रिन कुरुषे
परेभ्यः सद्भावानुपनयति कि नात्र सदयम् ।३२।

समार्थेभ्यो देहं त्यजति मनुजो हर्षहृदयः
सदातेषां मध्ये गुणगणनवैशिष्ट्यमधिकम् ।
विभर्तीशत्वं चावगतमभितो भाससरसः
अतो लोके स्वार्थात् परिहृतमनः सेव जनताः ।३३।

भवान् भावैर्लोकं श्रयति मनुजं साधुहृदयै
परार्थं सर्वं यस्त्यजति कलिताकल्परचनैः ।
अतो देशारक्षी नरमणिगणे पूज्यसदृशः
तपः सिद्धिं मन्ये भवति भवने व्याप्तयशसि ।३४।

नमस्कुर्वेऽहं सारसवितथभागीरथरवम्
सुगीता गीता सर्सिकवरदायेन जगति ।
यया वाण्यारामं सुपथमनुयान्तीश्वरजनाः
तया पाल्यो लोकेऽनुचरणमणिः श्यामविभवः ।३५।

विधातुः संसारं गणयति न कश्चित् शुभकरं
सदारामे भावैर्विभवविपदां केलिकलितः ।
भजन् नित्यानन्दे मतविजयिनां श्रेष्ठसुभगो
नमामो योगीशं नवनमनभावैः सवलिताः ।३६।

पराभूतो भ्रंगां श्रयति चरणानन्दभवनं
सभेयं शिष्याणां बहुलमनसा शुद्धिजनिता ।
महिम्ना प्रज्ञानं वदति रचिता सौम्यकविता
वयं तं योगीशं नवनमनभावैः सवलिताः ।३७।

चिरं चाकाशेऽस्मिन् वसतु शशिकान्तिः प्रणयिनोः
यशस्तारं हारं लसतु हृदये कोटिकनकैः ।
सदामोदं चारु लभतु मनसः सारजगतः
हरेर्भक्त्या शक्तिमिलतुमिलतोर्लोकमहसि ।३८।

न तां भक्तिं जाने चरणकमलानां हि सततं
तथापि त्वं भद्रं वितरयसिलोकेऽपि सुखदम् ।
कदा भावे मग्नस्त्वयि परमह सर्वमनिशं
प्र.ाशं नेष्यामि स्वविरहगतं कामविभवम् । ३९।

पितः सर्वः स्वार्थे समयमयते किं न कथितं
नयं जाने शश्वन्मनसि जगति किन्त्वसफलः ।
भवे जाले बद्धः सवल हृदयव्यक्तहृदयः
भवन्तं पश्येऽहं सकलशरण भारबहनम् ।४०।

समाप्ता सा विद्या नव सुदयया देवसमये
कृतं सर्वं पुण्यं तदपि सुखदा भावविगतिः ।
अतो याञ्चे किं वा नहि विमनुते मानसबलं
समाश्वासे सर्वं स [illegible] नयतः ।४१।

रमा यस्यांकस्था जनमनसि यो भावजनकः
सदा यत्सेवायामनवरतलीनः शिवपरः ।
सुदामानाम्नेऽह परमविदुषे भक्तिसहितः
नमस्तस्मै ब्रह्मस्वरूपधरदेवाय मनसा ।४२।

प्रदीप्तः सर्वस्माद् हृदयवशगः स्वाततपसा
परो देवो लोकेऽखिलमनसि वासोऽपि कुरुते ।
महत्वं कस्तस्यालपितुमाप सम्माति मुखरः
ददातीहारामं नहि किमधिक लोकमहसि ।४३।

कणः स्वान्तःसारः सफलमनसां भासयति यः
तथाभूतां लोकाननुगमनतः शाहसकरी ।
मनुष्यं. ससेव्याः हृदयगतभावाभिभरितैः
महोत्साहो ज्ञातो भुवनतलसौम्ये सुजगति ।४४।

परेषां संहारैर्भयमातिवरल तेन जनता
न किञ्चत् संलब्धुं पारिचतजनातिसरला ।
सचिन्ताः ये सन्तिस्थिरगतिमतां श्रेष्ठसुभगं
शुभे काले तेषामभिनवगुणान् ध्येतुसकलः ।४५।

इतो मिथ्याचारो जगति सुजनेनापि विसृतः
कथं लोकः लोके सफलगतितां लाभयतु सः ।
अतः सत्याधारैः सुलभविभवैः कार्यकरणं
बिधातुं संलग्नो भवति मनुजो देवसबलः ।४६।

समारोहे सर्वे विषयमनुगन्तुं प्रयतते
तथापि स्वांतत्र्ये सकलविपदां धामनयते ।
वय विद्यापीठ स्थितसमुचिताः किन्नु करणे
मनोदातुं नेष्टं भवतिहृदये शान्तमनसः ।४७।

अपनयति विलासं दासभावैर्विभावैः
कुचकलशकलाभिः कन्तकान्तेनकातंम् ।
मदभरदबबाहुं सेवते शान्तिमन्ते
सदयबलवराकीकिं न याति स्वभावैः ।४८।

कटुकसुभगजन्मेवामरलोकदेहः
स्त्रियमतिशुभलासं हारगुप्तांशुकान्तिम् ।
मदनपरवशा दृष्ट्वा सुदामा स्वमार्गे
तरलयति सहृत्त्व ज्ञानशम्त्रण कृन्तनु ।४९।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये परावर्तननामा
अष्टमः सर्ग समाप्तः ।

# ॥ नवमः सर्गः ॥

चचार गेहं प्रति सोऽस्तसूर्ये
ग्रामस्य देवान् शिरसा प्रणम्य ।
यो यादवो दृष्टिपथं गतस्तं
सकुशलं प्रश्नविधिं ससर्ज ।१।

देशे तटाके कृषियोग्यभूमि-
र्नवीनवृक्षा अभिजातपत्राः ।
अधित्यकाऽपि क्रमितुं स्थलीया
पथः सुदाम्नो वसतीव काली ।२।

व्यायामशालाश्रमपाठशाला
देवालयो दाम्यति संशयांशम ।
संचारलिप्तो निकषाऽज्यगन्धं
स्वदेवताः संस्मरणं चकार ।३।

जम्बूतरौ नास्ति चतुष्कशाखा
चरिष्णुनम्यान्तरशाखिभागः ।
यं धारयित्वारुढ़रोचमानः
सुखैः फलं स्वादयति स्ववर्गान् ।४।

तृणावगाढं स्थलमौषधीय-
मभ्युन्नतार्धः सुमनायमानः ।
चतुर्दिशोभित्तिमयस्तरुच्चः
एकाधिपत्यं कथयद्विभाति ।५।

अस्वत्थदेशः स्तिमिताविघातः
वसन्ति गर्ते न वलाकवालाः ।
श्येनस्य पाते पतनं समेषां
आकर्षति ग्रामटिकागवेषान् ।६।

कदम्बकं पुष्पमयं वहुत्वं
दृष्टौ पथं भेदमय प्रयाति ।
कदम्बनिम्वं बहुलं कथं नु
फलस्य भेदो मननं भिनक्ति ।७।

वाणी जलादानपरः समर्थः
पत्रावृत्तेनापि बहिर्भवन्ति ।
क्षीर जल यस्य निदाघघाते
तस्मै नमस्कारपदं ददौ सः ।८।

पुष्पातसेयंत्र मनोविकार
युनक्ति नेत्रातिथिपाक्षिकेव ।
क्षेत्रं मिलिन्दो मुरलीस्वरेण
गुञ्जनमनोभावभरैः समेधैः ।९।

खले वृहद्धान्यमये स्थले सः
स्वकीयवास कुटिरे विरेचे ।
बालामृतं बीजभरं हि यत्र
मुमोह मानं हृदयस्थितं नु ।१०।

प्रणामकाले पुरुषावलम्बे
सदा शिषं तानमयं वितेने ।
नैशं वसन्त मनसि ललाभ
हृदं मतं वाञ्छतां जनानाम् ।११।

सुसंततिर्नागरिकान् प्रयातु
विद्याधिका ब्रह्ममयी भवेऽस्मिन् ।
दोषो दिगन्तं स्वयमाश्रितः सः
एकान्तभावः सततं प्रबन्धः ।१२।

सामान्यरुपेण महाजनाः ये
स्वकीयभेदं विसृतं विधाय ।
परस्परं च परिवर्धनेन
कीर्ति स्वतंत्रा जगतः स्फुरन्तु ।१३।

ये सेवकाः भावमयाः भवन्तु
तेषां सुभद्रो दिवसः प्रयातु ।
भूमिं सुकोशां फलदान् सदा तान्
तनोति सौख्यं महतां मनांसि ।१४।

आरात् सरस्वत्यधिका विभाति
सो भावमग्नः खलमाससाद ।
खलेऽखलः खेलति तत्परेण
स्वभावभावैरुपकारदक्षः ।१५।

मन्दा तृणं भिन्दति मोदमाना
भ्रातुर्विमाने पितुराज्ञया सा ।
चिनोति धूनोति पृथग्दधाति
खलं लिखन्ति समये चलन्ति ।१६।

फलायमाना द्रुमपंक्तिरत्र
फलप्रदानं रभसा वृणोति ।
किं साधनं लक्ष्यसमं प्रभावैः
यातीति शंकाधिकता प्रयाति ।१७।

गाः गोपथे गायकवर्गसर्गाः
नयन्ति गायन्ति विहारभूमौ ।
क्रीडन्ति दास्यं पतिभावजं यत्
हृदो विकाराः प्रवहन्ति दूरम् ।१८।

गोग्रासगौणीं ग्रसितुं गरिष्ठाम्
मध्येऽधिका बालिशबालवर्गः ।
क्रमं कलायां निहितं नयं सत्
तुरीयसौभाग्यततिं तनोति ।१९।

गोपालवर्गाः सचलाः रमन्तः
समानकान्ति शिशुकैर्लभन्ते ।
मुग्धाः सुबालाः परितश्चरन्ति
यथागताः रम्यमना सरन्त्यः ।२०।

स्वस्थाः विहारे शमिताशिवास्ते
अघोरलोकात्परमात्मनीतः ।
हितात् परं या नरता स्थिता तां
बलिष्ठवाञ्छैरधिकां स्तुवन्तः ।२१।

शैलाधिराजं सुमहाविभूतिः
सिसेव तं कम्पितहावभावैः ।
ततः सुदामा हृदये वमन्तं
कवित्वभावं वहते प्रकामम् ।२२।

शनैः शनैः वायुरिहागतश्च
शरीरजं तं श्रममाहरत् यत् ।
अन्वेति तस्यावगतिर्गृहाय
प्रशस्तमासीत् शिवकल्पनायाम् ।२३।

शस्यान्वितायां कृषकाः सुजाताः
भूमौस्थितः सर्वजनैः प्रशस्ताः ।
भर्ति सुधर्में सततं ददन्ति
तेषां विवर्णं विमनायते माम् ।२४।

तीव्र गच्छन्तो हरयः सुदाम्नः
मनोहरेणात्र मनोहरन्ति ।
परस्परं नागरिकाः समेत्य
स्वास्थ्यस्य वार्ता मुखतो विदध्युः ।२५।

मायाविनं विघ्नमयाविधातुं
ये धर्मशीलाः विपुलांशशोषम् ।
कर्त्तुं कथं बद्धपराक्रमास्ते
वियुज्य सर्वैः सुविधां यतन्ते ।२६।

पूर्वाह्निकं कृत्यमिदं विचार्य
विद्यार्थिनो नीरतटं विकरान्ति ।
बालाः नभोगामि पतंगमास्ते
भयं विधायैव सदोडियन्ते ।२७।

कान्ति सुदीप्तां परिवीक्षते कः
तमोहरी मानवमानसेषु ।
जागर्ति प्रश्नो विदुषां मतेन
विकारधारा स्थितमानसोऽस्ति ।२८।

क्षीणाः स्ववृत्तिं दिवसेऽधिकार्थी
सपादयन्तेऽधिकहृद्यभावैः ।
नरास्तथा तां प्रति ना द्रयन्ते
भेदाग्निराज्यं नहि नाशयन्त्यम् ।२९।

अधीक्षितान्तः परमात्मनां ते
संदीपितां भावुकपद्धतिं ताम् ।
विधाय लोकस्य मनांसि जित्वा
देवाः भवन्तीह सुयोग्यतायाः ।३०।

सतोऽनुकर्त्ता सुसमीपवासी
मन्दार्थं वाचो ददते न कश्चित् ।
निक्षिप्य कार्यं स्वविचारहीनं
सदा सुमोदं हृदये भरन् सः ।३१।

सम्मेलनं भावकलाकृतीनां
साहित्यसारं विदुषां सदुक्तिः ।
मनुष्यधर्माय नितान्तशुद्धि
ददाति काव्यं च परे प्रशन्तिम् ।३२।

लिप्सां मनो मे परिवर्तनीयां
संकल्पनेनानियतां करोति ।
मनः समर्थं सकलं विधातुं
मान्या गतिः सानुगता तदीया ।३३।

संसारवह्नौ मनसाभितप्तः
गुरुमुपेत्याशु सुखं प्रयाति
ज्ञानेन दुःखात् समुदारवन्तः
पारंगता ब्रह्मविदो भवन्ति ।३४।

निधेः विकारो मनसोऽन्तकारी
सर्वत्रगामी पवनस्य वेगैः ।
अजानि शान्ताश्रयतांगतोऽपि
मनुष्यमात्रं शरणं गतोऽहम् ।३५।

ललाटमध्यस्थसुधाकरांशो
नरेशराज्यस्य सुमित्रवर्यः ।
त्यागी सुदामेव गुरौ वसन्यः
युनक्ति पाल्यान् नियमानुरूपः ।३६।

आश्चर्यमेतत् सुखमाननन्ति
लोकाः मृगाणां तृपिते जलेऽपि ।
भोगस्तु दुर्भाग्यगतो वितृष्णे ।
व्यापारितस्त्याज्यमिहाभिनन्द्य ।३७।

विज्ञापयामो भवतां समक्षं
समाः हरेः पार्श्वमिहावसन्तः ।
गुरोर्नमस्कारपद समर्प्य
कृपालु लोके कुशलाः वयंस्मः ।३८।

महत्प्रभावं स्वमनोहरेण
रुपेण बाले ! हृदयें मदीये ।
समास्वसन्ती जगतीह सात्रात्
निरापदं नो नवलोलुपानाम् ।३९।

सुसंस्कृतस्यास्ति महाखनिर्यो
महाजनायत्र जनाः सुज तः ।
ततोऽपि नीत्या धनधान्यदासैः
स्वधर्मभीरुः कृतभारतोऽयम् ।४०।

प्रजाः पलायन्त इवाधिकं नो
भयं विधातुं गजभीतिभाज ।
तत् संघटायां घटते दिवापि
महान्धकार चिररात्रिशोभम् ।४१।

संस्कारहेतोर्नवतांगतेन
राज्ये सुमान्योऽन्यजनानुकूलः
संपूर्णतामाप्य विकासशीलः
सुदामनामाप गुणानुरूपम् ।४२।

आजीवनं पाठयितुं प्रयत्नं
विनाहृतिं मे भविता सुदायः ।
फलाय कार्यं गणिते न नीतौ
मत्वा मनः शान्ततमं विजतम् ।४३।

संकेत माप्तुं जगतीस्थितेयं
वरस्य कस्यार्तमतः विनेतुः
केनास्ति लोकं परिवर्तनीयं
कौतूहलं मेऽपनयन्तु लोकाः ।४४।

सहस्रसूक्ति मनसा विमृश्च
जनोऽन्यथाकर्त्तुमनर्हतायाः ।
सीमानमाक्रम्य तुरं समर्थः
सजायते नीतिविदां मतोऽयम् ।४५।

व्रण विधातुं हृदये विदूर
न गन्तुमर्होऽसि ममाधिदेवा ।
तवाहितेर्ष्याकलुषान्तरात्मा
सुर्गेविसर्गे स्थितिरस्मदीया ।४६।

नक्षत्रनेमीव महानुभावं
स्वयं समाजे परिवार्यं सोत्सुकाः ।
निमग्नभावेन सदाशयस्था:
विचारगुम्फाः सुधियो यथार्थाः ।४७।

मन्देतराणां लिपिकानुबद्धं
पीयूषवर्षं श्रवणे निपीय ।
सनातेन सत्पथि संदितान्तः
समृद्धिसाकं सुखिनो यथाध्यीं ।४८।

रसालशाखास्थित पक्षिवर्गः
कुञ्जन्ति भावेन बचोऽभिरामम् ।
दृष्ट्वा हृदस्तस्य मुदा बभूव
सर्वस्य सत्कारपदं वरेण्यम् ।४९।

अभिजनजनमाप्या वेदमानैर्विमुक्तः
कृतफलमनुगामी वित्तहीनो बभूव ।
सलिलपिवयिषन् संतोषदान्स्याभितोहि
शममनधिगम्या संस्कृति दुःखमाप ।५०।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये परावर्तननामा नवमः सर्गः समाप्तः ।

# ॥ दशमः सर्गः ॥

काले समाजगतभावसमुत्थितेऽस्मिन्
पित्र्यागतैः शतजनैः ससुखे सुगेहे ।
संपादनाय वरणस्रजमुत्तमाय
दानेन पूतकरणं निलयाज्यकामैः ।१।

जाते विवाहदिवसे पितुरात्मभात्रे
दुःखानुभूतिमतिबाहुलिकां सुदाम्न। ।
पूर्वाजितां सृतिसमानमतिं गतिं तां
दैवस्त्वरं जनगणेषु पपात पूर्णान् ।२।

कन्याधिका प्रतिदिनं समुपेत्ययत्नैः
वर्षां विना घनमभावपदं विधत्ते ।
जीवाः वनञ्च परिहाय सदोत्पतन्ति
सान्द्रा समेत्य विपदोऽभिसरन्ति मौलौ ।३।

आचार्यता परिणते स्वसमाजबन्धे
संपद्यते विनयकार्यंकरः सुदामा ।
न्यायाददीनविकृति परिणामरम्यां
एकान्तका जगति का अनता चकास्ति ।४।

यस्तस्य सेवकगणः प्रथमे गृहस्य
सेवां सप्रेम ददते पुनराशया सः ।
वित्तेन हीनमधिकं समुपेत्य नूनं
यातो विकामहृदयो विफलाधिकारी ।५।

प्राप्तिर्जनेऽतिविरले मनुनौपदानात्
याति स्फुट कुदिवसे नयमार्गभेदे ।
तेनाभितः कुलभरे नतमित्रवर्गः
सेवामलैश्च मनुते सफलं शरीरम् ।६।

बुद्धौ प्रशंसितजनः स्वगते प्रमाणे
सत्यंचिनोति नहि मुञ्चति बल्लभाग्रम् ।
संन्यासयोगसहितावगतात्मतत्त्वो
भार्याप्रियो युवजने प्रथितामिजातिः ।७।

ग्रामे विधानभरणैकजनः सुदामा
नारीजनास्तमभितः समुदाहरन्ति ।
गार्हस्थ्यकर्मणि सुमन्दशयो विभाति
सर्वत्र सद्गुणशिखाः ज्वलनाय नार्हा ।८।

उत्पादने कटुसुखेन विमुच्य तन्द्रां
प्रेम्णा सदस्यनिकरान् बलयन् विमानैः ।
एकान्तवासघटनां विनियुज्य सम्यक्
कष्टावतारमसृजद् गणितापराधः ।९।

संतापघर्मतपनेन विमानितो यो
योगीशमेन तपति मनसीष्टमाप्तुम ।
अम्भो रुणद्धि नयनस्य चिनोति चेष्टां
संहृत्य भोगमकलं नवयोगधात्री ।१०।

द्रव्यं हि विश्वभरनिर्जरवृन्ददुर्गं
सन्मानवस्य परमाधिकृतं विशेष्यम् :
शुश्रूषया मरणसन्तसमागमस्य
सम्बन्धहासहृदयो भजते स्वभावैः ।११।

संवर्धते सुमधुरं हृदयं
विम्बाधरा वनलता सुमनायमाना ।
हृर्षायते विविधरुपधरा धरित्री
जाते मघौबहति मन्दरयः सुवायुः ।१२।

श्रीकण्ठनेत्रविभवा स्मरतापहूति–
दावानलप्रबलभेदितमानदेही ।
छिद्रं प्रवेशनिपुणा नवशूलधारा
मोहं जिघांसति समुद्यतपातकत्वम् ।१३।

रुष्टान्वयः पतितभोजनमित्रवर्गः
विप्रस्ततंक विधिना प्रथमे समाजे ।
ध्यायन्ति यत्र जनता सधनं कृशांगं
कार्यं शमेन सुगमं विकरालतायाम् ।१४।

यादृच्छया सुकृततोषपरायणो सः
शृंगारभारमगणी चरतीति सौष्ठ्वम् ।
भाग्येन मुह्यति कलौ रभसं सुदाम्नो
धन्याः नुदन्त्यसफलत्वगताः जनाः हि ।१५।

चैलांशुकेन विशदस्ननुकान्तिगन्धो
भुक्तं न वेति दिवसे परितो विमर्शः ।
स्वप्स्ये कदा मनसि धारयितुं प्रवृत्तः
साधारणे परिवृत्तः निर्चितो विकारः ।१६।

तेजस्वि देहभृदिहावगतो गुणैश्च
सादृश्यदृक् शिवदसत्यप्रियस्य भावो ।
दैत्यादिमेविकृतिमान्न बभूव धैर्यः
वीरत्वमग्रसृत तत्समकक्षतारम् ।१७।

पूज्यार्थं विश्वजनता सुखहीनजाता
दु:खं हि गुप्तपरदानरहस्यमुक्तम् ।
कल्याणमानकरणस्य सभास्पदं हि
तं संमनन्ति महनीयजना: सदैव ।१८।

भूमौ शयान उत वस्त्रविसारितेऽसौ
भुक्तं सलीलमकच: किमुसान्नभाजम् ।
दण्डं बिभर्ति दिवसे भ्रमकारिरात्रौ
वस्त्रं वसन्ततिलकेऽधिकमोदिताशम् ।१९।

उद्भावनेषु कुशलो भजनाविनाशी
साधर्म्यंशिष्यकरणे सुरुचिंदधान: ।
ग्रन्थो हि मित्रमविकारि महार्धमह्यम्
चातुर्यचिन्तनचलिर्हरिगानवर्गे ।२०।

शान्ति: प्रिया सुप्रियया सहजीवनान्तो
धन्य: परार्थंगतिभिर्दययाभिभूत: ।
सत्यं प्रमाणसहितं दधते प्रभावं
सत्संयमो वहति साधनपारणाय ।२१।

ध्यानान्तरे चपलमानसशोधनेन
शुद्धं मनो नयनयोर्मुहुरीक्षणंन ।
सान्निध्यत: सुचरितेन पवित्रदेहा:
संरम्भनोव्यवसितापकृता: विभान्ति ।२२।

तल्पंगतो दिनभरं श्रमितार्जितेन
मुक्तार्थंलालितनिधानसुमानशाली ।
पादावुभौ नभसि पक्षिगणं विलज्य
भातोऽर्धभागमुपरि तरनिम्नभागे ।२३।

पादौ न तौ धरणितो नविदूरमेतौ
वस्त्रावकाशमधिकं ददते न पृष्टम् ।
न स्पर्धते शिरसि शीर्षकमातपत्रं
संयोगिनोददति वाक् नहिंसाभिलाषम् ।२४।

सत्येन साध्यहिरणं वमुमद् विधाय
धीरः कृतिः कठिनखेदमपाकरोति ।
बाधा चतुर्दिगुपदेशमयी समैति
किं बाधको विकृतिमत् कुरुते मनो मे ।२५।

बर्षाभिघातसहनेनसमागतां तां
शक्ति स्वदेहजनितां परितापनेऽपि ।
एक्यां प्रयुज्य तनुदुःखमवाप्नुवन्तीं
संतापितः कुविधुरे परमेऽधिकाले ।२६।

ग्रीष्मे महाजनगृहादनुरागसिक्तः
भौमावधानपिहिते विवरायितास्यः ।
नानाविधानरचितेन परार्थमाप्तुं
सेवाव्रतैः परमभावगतो विभाति ।२७।

वस्त्रं विहाय ललने शरदोऽवगाहे
संध्यायते सुखमनाः प्लुतसत्त्वभावैः ।
सत्याधिकारमविहाय सुकर्मकारी
सामर्थ्यभावसबलेन सदा बिजेता ।२८।

हीनस्य दानमधिकं जगतः प्रशस्तं
योग्यानुभावकरणं सम्मितौ जनेभ्यः ।
सर्वं भविष्यति यशश्च फलं न मोघं
मध्या गतिर्महती गुणकारी [illegible] ।२९।

वैद्यांशजातमथवा वरदानभूतं
सौंदर्यभावमयमन्यजनाभिलाष्यम् ।
देहस्य लब्धसमये युवकान्तिभाजि
संकर्षणं मधुरभाषिषु सो वितेने ।३०।

श्रोत्राय सौम्यमधुरं सुकरं सुवाक्यं
स्पष्टुयं प्रिया मुखवचो नयनाय रम्यम् ।
सौगन्धजं शयनकालगते च नित्वा
श्रुत्वा प्रियांकगमनं सुखमेधते सः ।३१।

संविग्नबाधितजना च सुदामनाम्नः
गेहस्य रक्षणपरापरमानमर्हा ।
सामान्यतो विनयगौरवसंस्कृतासीत्
संभारिता सरति रोषसमाश्रिताऽपि ।३२।

प्राणान् कथं परमना परमार्थभर्त्री
प्रीत्याप्यवाह्यमधन वहते वराक्षी ।
दुष्कालमाप्य विकृतिं परिधापयन्ती
गात्रेण भंगविधुराकृतधारिणीव ।३३।

पीनस्तनानमितमध्यसुरम्यदेहा
घर्मांभसा विधवला कृतवस्त्रभारा ।
संसर्पयन्त्रनिभृता शुभकेशजाला
तारुण्यशोभनवती सुनदीव रेजे ।३४।

क्षान्तेर्दशा रचित केलिकलातिचक्षुः
यालम्बनाय कृतकूचसुरज्जुसघा ।
द्वारि त्रिविष्टप इवात्र पुलोमजादिः
संलेकनाम विनिवेश सुसाध्यमाप्य ।३५।

श्रद्धामृता पतिगता विरसेरसान्ता
मंदस्मितैः कुसुमितैव विभाति कान्ता।
सैषा चिरं परिचिता युवती सुदाम्ने-
ऽऽमान्ती स्फुटं कविजनस्य हृदिस्थितैव ।३६

वित्तस्य दुःखतपनं न च दीर्घमस्ति
नार्यों न राज्यमपराधपरायणं स्यात्।
वंशेऽपि याति धनमागमनिश्चयेन
नारी हि तर्पमभितः कुरुते धनस्य ।३७।

श्रेष्ठो मनुष्यसुजनिर्जगतीव मोक्षः
चैतन्यमस्ति नरविग्रहसंश्रितं च ।
तर्षं करोति सुखदाय सदा स्वभावै-
र्भोगाभिभूतहृदयं नवतां तनोति ।३८।

रात्रेः सुशुभ्रवसना त्वरितेव जाता
ज्योत्स्ना मनः सुखयते हारतैर्नवीनैः ।
नीराजने नयनयोर्क्षमदायिनी सा
चन्द्रंगता ककुभि हासमयी विभूतिः ।३९।

जामाजनैः प्रथमभावसरैः सुदाम्नो
धैर्याभिरामकथया शिशुतां तनोति ।
सर्वे प्रियाः कविगणे सुजनाजनास्ते
सद्भूयश्चसत्य नकषं समतानुपूर्वी ।४०।

मध्ये समाजगहने परिवारकर्षी
संध्यागतेद्विजगणेन गतार्थभावः ।
तस्मै जनाय सुगुणैः समये सुसेवां
दानं करोति मनसा नृपतिर्यथार्थम् ।४१।

चन्द्रायमाणहृदयेन सुपुष्पभावैः
लोकं विशोकरमणं समये करोति ।
श्यामां सुकालमनुलभ्य शुभां तनोति
चित्रा मनोहरकृतिः प्रकृतिर्जनानाम् ।४२।

आयाचमानजनता विदितात्मभावः
सेवां समर्पयति मुक्तमना विशोकः ।
राजेव तस्यविकृतिः सुजनेषु सिद्धा
काले विशो महति कार्यसमापनेन ।४३।

आलोचने स्वगृहकार्यमपि प्रहाय
संधातुकाममनिशं सुहृदि प्रभाते ।
आनन्दमेति हृदये मधुपो यथा स्वे
पुष्पावलिं सुमधुरं स्वगतं विचार्यं ।४४।

सर्वत्र जीवनभरे कुरुते सुकार्यं
तेनापि दुःखमतिशायिविवर्धमानम् ।
भाग्यस्य दोषगहनं किमु कर्मपाकः
लोको यदा संहननसंहतिमाप्नुवन्ति ।४५।

पाषाणकालशुचितां मनसः स्वाच्छा
बालः यदा गृहगताः सफलीविधातुम् ।
तत्रापि किञ्चिदनिवार्यसुकार्यमानं
आयाति किं मनसि तत्कथनीयमद्य ।४६।

उद्विग्नसन्नद्दिवसे शुभवेदनाभि—
र्भावः स्वकीयमनसा परितोऽपिसृ ष्टः ।
विस्मारिता सकलशास्त्रमता समीक्षा
दुःखे वदामि शतसोदरभावलाभम् ।४७।

नाना विहाररमणीयवचो विलोभी
प्राचीनकार्यवहनं कुरुते युधानः ।
सेवा स्वकीयसुकलैरखिला गृहेषु
संपाद्यते स्वमतिभिर्विरलाधिकारी ।४८।

द्वारेषु वालकगणः सततं रुदन्ति
भिक्षान्नपात्रलवलम्बितभीतिभाजा ।
चैलं प्रक्षाल्य रविघर्मणि शुष्यतेऽघ
शोभा गृहस्य परमं भवतीह लोके ।४९।

तीक्ष्णैः कटाक्षवलितैः पुरवासितानां
वद्धाननाः विविधतानमयाः पतन्ति ।
क्रोधस्य कां परिणतिं समुपेक्षते यः
संलापतः शिखरमान्नधुनातिशेते ।५०।

पुण्योदयैः शुभधनस्य तरंगितान्तः
तत्रागतः सदययाभिमदेन मत्तः ।
सगं सदा कृतवतां सुमहानिधीनां
चेतः प्रफुल्लतितरां चभविष्यतीति ।५१।

तुंगं पदं ललितलाभकरं च नास्ते
भंगः कदापि भवतीश्वरनामधारी ।
आक्रम्य योऽधिवसतीह परः सहस्रां
श्लाघास्पदं मदविहीनतदेकमूर्तिः ।५२।

निद्रादरिद्रनयना परिरभ्य मानाद्
सद्यो वियोगविधुरा हृदयंगमा च ।
लीलाविलासमबलाजनगण्यदोषं
दत्त्वा सुखं मुहूर्ते मुनिमन्मथानाम् ।५३।

साटोपशोकबहलेन बिलुप्तशोभा
सारोपिता किसलयैश्च निशागमेन ।
चेतो विनोदयितुमद्य मदन्तिकेऽपि
निर्भर्त्संता परिभवेन सुहृद्विना किम् ।५४।

आलंवते नवसुधां गुणसंपदा यः
सज्जीभवन् सुमनसा बचनामृतेन ।
हिन्दोलके समुचितैः गुणकीर्तनानि
गायन्ति देववनिताः जयशंसिभावैः ।५५।

दृष्ट्या वियोगविधुराशरदभ्रकान्ता
सातत्यभूषणतया सुमणिप्रभाभिः ।
जिज्ञासितुं त्यजति सा मदनानलं तत्
पाप्मानत्र जयते ममतामदेन ।५६।

प्रेमाधिवासमहिमामहितः सुदामा
आलोललोचनमयीं सरसां वचोभिः ।
योगीश्वरस्य विषयेरचिताञ्जलिः सः
आश्राव्य वार्तमधिकं दिवसं ब्यतीयत् ।५७।

सा सानुरागहृदया प्रियवासभूमौ
हर्षातिरेकमनसा श्रयतिस्म देवम् ।
धन्यस्कृती प्रियतमाजन माननं तं
वीक्ष्यानिशं सुखमयं समयं करोति ।५८।

पृच्छां विना गुरुजनस्यजडो भ्रमामि
बोधं बिहाय वशितान्तविकारबर्गं । ।
आर्द्रांशुको धनरसैः रसनं विनाद्य
सार्धं वनाबलितमो नहि काचिदिच्छा ।५९।

वत्सो गवेषयति कष्टजडायमानः
पार्श्वे पलाशिगहने जननीतिकारः
गात्राण्यकर्म शिथिलानि मया विलक्ष्ये
गात्रेण कर्मगणयन्ति समस्तलोकाः ।६०।

सहितसुखसमाधिः सः सुदामा सुदायं
अविकलमतिभिस्तं चोपभुज्यातिरेकम् ।
परिजनसुखशान्तिं प्राप्य शान्तो गृहान्ते
परिवसति सरागं धन्यभाग्यं विचार्य ।६१।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये भुक्तिनामा दशमः सर्गः समाप्तः ।

## ॥ एकादशः सर्गः ॥

आशीः प्रयुक्तां विषयावभासितां
छायामयीं मानसतोषहेतुकीम् ।
सभाविनी भावविभासमागमें
श्रद्धामयी साकथयत् प्रमाणिताम् ।१।

धर्माधिवासानुमता प्रियं प्रति
दुःखस्य सा दत्तवती वचोमृतम् ।
वेलावला जातिजनापमानदा
प्राप्ता सुखव्याहतदुःखकारिका ।२।

पर्णाविलं प्राज्ञवराय मण्डपं
त्वन्निर्मितं तत्परिहासगर्हितम् ।
वर्षाविघाते बहुशीतलायिते
बाढं सकष्टाः रजनीं सहामहे ।३।

बालाः धनाभावमनुस्मृताविव
प्रेताः समाज परिहाय सागसः ।
सर्वोत्सवं दुःखमयं गृहस्थिताः
कुर्वन्ति ताभ्यश्च न चिन्तनं फलम् ।४।

कन्या समालोक्य दयार्द्रमानसः
विस्तीर्णबोधः बत किं न जायसे ।
सन्मानवाचारपर. विरागजा-
तद्भावनात्यागरयेण शोषितः ।५।

खेलोत्सुकास्ताः सवयस्ककन्यकाः
हेयांशुकाः भासुरवासनाभिः ।
अन्याभिराराम कृतौसमीक्षिताः
श्रान्तिं भजन्ते स्वमतेर्पुनर्भवाम् ।६।

स्वात्माभिमानी व्यवधाननिष्ठैः
वंशेभवैर्हेलयितुं समुद्भवः ।
उत्प्रेक्षणीयैः शपथैः स्थिरीकृतः
देवावतारेण सुखं ददातु नः ।७।

अन्नादिभागेन दिवा मलीमसैः
स्वांगानि भंगानि समुद्गतानि ते ।
नेयाः समाधौ गलिताशयाः सतां
प्राणाः हि नेयाः समिदग्निना कथम् ।८।

विद्याधनैस्तद् बहुमानभाजनं
सर्वं गताः राज्यसभां त्वमापदि ।
तत्प्राप्तिहेतुर्न प्रयोजनं बहु
वित्तेन लोके यदि नास्ति संगतिः ।९।

संघर्षमत्याञ्च सदाधिकारिणः
सामर्थ्यवन्तः धनदेहमानसैः ।
ऐक्यानुगामी बलताभिभावित-
कस्यापि कीर्तिर्न बलान्यभाविनी ।१०।

ब्रह्मासनस्थस्य कुतस्त्यधान्यकं
वर्द्धिष्णवे योग्यधनागमं शुभम् ।
सेव्याय तस्मै नहि सक्तवोऽभवन्
देवः ददातीति लपन्त्यकर्मिणः ।११।

सीमास्थितं छात्रजनं विनाधनं
सायासमध्यापयते चिरार्चिताम् ।
विद्यां सुविद्वान् जगतोऽधिकास्पदं
गत्वा नृपं मासिकदानमाप्नुहि ।१२।

आनन्दमुख्या भुविदेहधारिणां
अन्यत्र हित्वा सरति स्तरं जनिः ।
आलोहितांगे जननीं चलांगैः
तातं गुरु सेवकमंगजं क्रमैः ।१३।

विद्यारसैर्विज्ञनरः परस्पर
विस्तार्यंते म्लानचये मनोरथम् ।
द्योतंप्रदः धर्मधनैः सुखायते
धाराजलैर्मेघततिर्यथा पुरः ।१४।

त्वत्तो दरिद्रः क इहोद्भवोभवे
यदीयभिक्षामधुमाधवीलता ।
यासीति वाक्येन न गन्तुमिच्छुकः
सिद्धिं कदासाद्य सुखी भविष्यति ।१५।

उन्मादिनीनां प्रथमा विकारिका
सेवास्तुवाराममदादिशोषिका ।
सग्रामभूमौ सुखदायिनी मृषा
संजायते कैतवमार्गतृष्णिका ।१६।

व्यग्राः सतीर्थ्याः गृहधर्मयोगिनः
धैर्यावदाताः किल भावुकाः परम्
अज्ञानमार्गेषु सुखस्य शोषणं
जिह्वाशनायाचलति स्फुटायिता ।१७।

यस्यात्तकीर्तिर्दयिता मदायिता
धान्योद्भवा भाजनमन्नदस्य यः ।
वन्द्यस्तमभ्यर्चयति स्तुतेःपदं-
स्तस्याङ्घ्रिभाजो नहि पद्मपल्लवाः ।१८।

धन्यः कृती यो धनिकः सुखान्वितः
धनं विशेषार्थकरं प्रमापकम् ।
कल्याणसेतुः स्थितिमातनोति यः
शुभं सुसाध्यञ्च सदोपकारम् ।१९।

धान्यातिरिक्तं भुवि कास्ति मूल्यजा
यामीहते माधुकरी प्रयत्नतः ।
संक्षेपमेवार्थकृति शुभेच्छया
संचारिता भाग्यवतः प्रभाविताः ।२०।

पुत्र्योऽधुनाष्टादशवर्षमेधिता-
स्तासां विवाहश्च विसत्वरोऽवरः ।
रूप्यं विना ताः विफलीगताः परां
किं कारणं नो हृदयं विकारितम् ।२१।

शोकाग्निसंतप्तहृदा वदामि भो
गार्हस्थ्यपोतस्य सुकर्णवैभवः ।
सतानभावेन मनांसि वस्तुतः
संपादयन्तीगितवर्धमानकम् ।२२।

सौधं परेषां मणिमण्डितावनौ
शोभायते मंगलवद् विसर्पितम् ।
संरोधशीर्णा गृहधर्मधारिणी
साऽस्मासु शोभां कुटिरीकरोतु किम् ।२३।

वाचयमः यां परितोऽभिवाञ्छते
साध्या प्रयत्नैर्नं विकल्पलांछिता ।
कामं व्ययैः संपरिपूरिका सती
श्रीः सर्वदा सा भवनायितास्तु मे ।२४।

संकल्पितं दिव्यति वास्तवं मुधा
केनानित लावणिका निराकुला ।
मह्य व्यपायः सुचिरं हि भासते
तस्यां समेत्यावशितुं सहर्षितम् ।२५।

ऐश्वर्यपानं जनतापकर्षकं
तेनैव शीर्ष्याः यशसां सुभाजनम् ।
तं त्वं विरामैस्त्यजसे सनिर्दयः
संश्लिष्य पत्नी सहते निराकृतिम् ।२६।

संतोषको जीवति शक्तिसार्थकः
आशापि यत्नेन सुरक्षिता तरिः ।
त्वत्सन्निधौ सा न मदीयपोषिका
लब्ध्वा वराकीं रसिकः विमुह्यते ।२७।

वृन्दारकः यज्ञभुजो धनं प्रति
कांक्षानुगाः मानवतुच्छदेहिनः ।
सर्वा गतिर्जीवनचालनाय हि
वार्त्तायनो वेदयते विपश्चितः ।२८।

मूकीभवद् जीवसनाथितं वनं
केषां न भीत्यै परिकल्पितं गतम् ।
सेवार्थमर्थो महते प्रयोजितः
साफल्यहेतुर्भवतीह योगिने ।२९।

आलोचनार्थं हृदयं सुकम्पते
श्रीदेन्द्रवंशे परिभावितांशलम् ।
सा वासना मे चिरकालतोऽर्थिता
प्रेयादृशी संप्रतिभाति मानिता ।३०।

गोप्येषु किं कार्यमनुष्ठितं मया
मूर्खास्मि येनाहमतीव वैशिकी ।
संध्यायमाना वयसा प्रधानतः
किञ्चिन्न ह्रीशत्वमवापितं यदा ।३१।

माधुर्यमासाद्य धराविनश्वरं
चेतस्त्वदीयं रमते प्रभावितम् ।
लोकैर्विनष्टं हृदयेन वाञ्छितं
दैवं मुहूर्तेन वशे विलम्बितम् ।३२।

भीतिः समायाति मनोगता सदा
वांह्यं विधातुं लघु नो समर्थितम् ।
त्वं मित्रगामी मनसा कृतश्रमः
प्रीतिं सुदीप्तां कुरुषे सनातनीम् ।३३।

राजा स्वमित्रं हृदये विचिन्ततो
दुःखे स्थितिर्या विपरीतरुपिता ।
साहं विशोकाग्निपरायणानता
मान्येन लोके हठतो विगर्हिता ।३४।

रन्ध्रं समासाद्य सुखं विहन्यते
वित्तं जनानां शरणं प्रभावजम् ।
रक्षाकरं दुःखभरे हि लौकिकं
तस्मै समर्था परिलब्धुकामुका ।३५।

उन्मेषणं ते विदुषोऽमरावती
सह्यं न जातं किमु लोकभारते ।
संध्यायते सूर्यविभूतिसंभवा
प्रातः पुनस्तामसशान्तिकारिणी ।३६।

चातुर्यवन्तो मनुजाः प्रभासकाः
कीर्तौ स्वभावेन परान्तकारिकाः ।
धान्यं विना का गतिरस्मदुद्भवा
मां बाधते सुखसिंहासनस्थिताम् ।३७।

आभासते मे मनसः शरीरिणी
भाव्या सुखागारमहीतलाचला ।
दृश्यंगतः स्वप्नगतोऽपि भावुकः
त्वं भाविनीं मां वरितुं सुमाञ्जलिः ।३८।

अभ्यर्थनीयास्ति सुखार्थभावना
परावृत्तौ शिवसनाथलेपिका ।
यां संश्रिता सघटना विवर्धिता
तृष्णालुदिश्या दिविसंस्थितैर्दरम् ।३९।

संख्यायतं कामनयाभिवाञ्छितं
सापस्तमिस्रो हृदयार्हगीतकम् ।
अंगीकरोति स्मृति बन्धुरायतिः
धान्यांशनं नोचिमास्थितं मया ।४०।

एकात् सदैको धरणौ वरीयते
सर्वत्र नैवान्यगुणो व्यमिश्रितः ।
निर्णायिका सा परितः परिष्ठितिः
तस्यां निवासो मनुजाय वर्जितः ।४१।

शोषाप्लुतानां न धनं समीहितं
त्वं मानय स्थानगतं विभावितम् ।
येनात्र दुःखानि विकीर्णरूपतो
गेहाद् विनष्टानि सरन्ति गह्वरे ।४२।

कार्तस्वेरणाच्छुरिताऽतिचित्रिणी
क्षोणौ कुटुम्बो महिमाकरम्वितः ।
तस्यः कुहुनात्मगतातिरेकतः
किं तापन नाम चरिष्णुकार्मणम् ।४३।

त्यागस्त्वदीयो गुरुगेहसंस्थितो
किं न स्मृतेः सद्विषयंगतो जिनम् ।
विद्याः समागम्य धनाय सोत्सुको
जन्मान्तरीया फलता गता कथम् ।४४।

यस्यास्ति पत्नी न गृहे धनं विना
दुःखे विलग्नस्यकथा विलक्षणा ।
तस्यात्तघर्मोऽशयति स्मृतेः पथं
नैयः स्थितायां मयि भावनायतः ।४५।

हे भावने ! त्वं सुखदायिनी सदा
पत्युर्हृदि स्थातुमलं भवादरैः ।
येनस्थितिर्मे निमये वियोगिनी
संयोगिनी वा भवतु स्थिरा परा ।४६।

व्युत्पन्नलोकोऽद्य विहारशालिनां
सुस्वागते तत्परतानुदर्शकः ।
त्वं मानिनां मध्यचरः विघट्टितः
सेवाश्रयः सिद्धपदेन वञ्चितः ।४७।

शाश्वत् प्रदीपेन परोपकारिण:
स्वं वर्तनं चालयतां सनातना: ।
सिद्धार्थमत्यर्थमयं प्रकाशयन्
चित्रा: भवन्तीह सदा प्रवृत्तय: ।४८।

साम्यच्चयेनात्र पुराणकर्मणो
जन्मान्तरे मानवताऽधिकारिकी ।
संपद्यते नास्ति विधारणास्थिति:
प्राप्यापि तोषाय कुरु प्रयोजनम् ।४९।

क्लान्ता: वयं भाग्यविलासमानका:
ऊनं भवेमो हृदये पराजिता: ।
कर्त्तव्यभावेन समर्थशालिन:
सर्वं सुसाध्यं विहितं सयत्ना: ।५०।

शीघ्रं करोत्येव शुभं महाजन:
कालोरसं शोषयति व्यतिक्रमे ।
बुद्धि: प्रयोज्या विभवार्जने सदा
सिद्धि: समायाति मनीषितानता ५१।

तुच्छास्पदाऽहं नयपातनिश्चला
नारीजने शास्त्रसुसंगताऽनता ।
तत्रापि भावानवबोधिका मति—
र्हृदिं दुनोत्येव परस्य लौकिकम् ।५२।

संभावनेयं जनता जनार्दने
संजीवनीं दापयति स्वभावत: ।
सामाजिका धारणताऽनुजीविता:
सम्बन्धिता मार्गं महताऽनुरागत: ।५३।

शिक्षा समाजे परमोपकारिका
मह्यं न केनापि विभावनेन हि ।
सा सौख्यबाधा समुपस्थिता तथा
दूरं प्रहर्तुं न समर्थमातृका ।५४।

नौका जले या तरते मनस्विनां
भूमौ न शक्तिश्चलितुं मनागपि ।
लोके वृणीते नु परस्परं भरं
तीर्त्वा समर्था गमनाय योगिनः ।५५।

दीनार्थजन्मान्तकरस्य लौकिकी
सेवासमाहारपरस्य भावना ।
दैवं विरुध्यापि समुन्नतेः पथि
संचारपूतो भवतीह निश्चितम् ।५६।

धन्याः मनुष्याः धनयोगिनः परं
संधानतो यान्ति मनोरथागतिम्
लोके महान्तः समयानुपालने
तीर्थीकृताः सत्पथसावधानतः ५७।

शीतेनयुद्धेन समाकुलाः जनाः
लोके धनायैव सयत्नभागिनः ।
कुर्वन्ति सर्वे धिषणाभिरागते
सेवावकाशैः स्वमतावलम्बिनः ।५८।

संज्ञास्थितेः सो गरिमा मदीयः
सत्या समीहा फलदायिका त्वरा ।
विद्वान् सकर्मा शिवतांगतोऽधनः
साफल्यमाप्नोति महानुभावकः ।५९।

आकर्षकं लोकगतं सुवैभवं
बध्नाति सर्वान्भुवि मानमानसम् ।
आख्यायिकाकाररतिं निरीक्षितुं
कीदृगजनो क्षुब्धमतो युवायते ।६०।

आक्रन्दितं वीक्ष्य गृहानुसंहितं
को लोकतो नास्ति विरक्तिभाजनम् ।
आजीविकायां परिवारवारितः
संलग्नतां तां वृणुतेऽनिवार्यतः ।६१।

आडम्बरे मानवतात्मविस्मृता
साकास्मिकीं भोगततिं विभाविता ।
पुण्यं विहातुं यतते स्वमानसैः
कापेयकल्पं कुरुते स्वभावनम् ।६२।

आक्षेपकोऽयं सगरातनूभवः
संसारसारं गणतेऽल्पतांगतम् ।
तस्यात्तधर्मोऽपि विना धन ततं
केनास्मदीया भवतु स्वराजता ।६३।

आत्मंभरिः सर्वसुखायतत्परो
नो किञ्चिदाप्यं यतमानसायतम् ।
तेनास्तु दुःखं सुलभं ममाधुना
विद्वायते शास्त्रसुचिन्तनान्तरम् ।६४।

दुःखायते मानसभावसंकुलं
कान्तिर्मुखे नास्ति चिरात् सुरक्षिता ।
हन्तुं न पश्यामि धनादिचेष्टिते
चर्चा मयाऽस्तो विहिता धनायिता ।६५।

आराधनायैव समाजभूतयः
गन्त्री सुजीवस्य तुषोदकेस्थितिः ।
आन्दोलनं धारयते सुजीवनं
धान्यं विनाकाचिदभावरुपता ।६६।

ओजायते धान्यसुरक्षितो जनः
भावैर्बलीयो नमतां विगच्छात :
नम्रो सदा दैन्यवशो विगर्हितो
दीनः प्रयत्नेऽपि न सौपदं गतः ।६७।

कादम्बिनी तृप्यति मानसं कथं
वित्तास्य सा दीपयिता सदाशिवा
आगन्तुकं सौम्या ! शुभेतरायते
आभाणकः शान्तिकरौ मतिमताम् ।६८।

आकालिकी क्षीबकरी धनागतिः
विद्वज्जनानां घृणिताय कल्पिता ।
कृच्छाय सा दुःखप्रदायिनी सदा
सेवाश्रया मां त्यजतु विदेशजा ।६९।

विद्योतितात्मा जगतः सदाशिवः
कार्श्यं तिरश्चां समजे न तेजनम् ।
सत्त्वं विलासाय विधातुरास्त्रयम्
रक्षाकरं तद् परिरक्ष साश्रितम् ।७०।

दीर्घीभवत् स्नेहमनोरथः सतां
वित्ताश्रयो जीवितदानसक्षमः ।
कारुण्यजालेन सुनद्धमानवः
उद्वाहगाथा स्मरति स्थवीयसीम् ।७१।

दृष्टा मयाः सज्जनता प्रशंसिता
कीर्तिः श्रुता या भुवनाञ्चलंगता ।
वंशस्य कर्त्ता सुसुतो विलोकितः
संचारणायात्र धनं सुदुर्लभम् ।७२।

धमर्थिकामाः धनतः समुद्भवा
विद्वज्जनानां विभवो विमुक्तये ।
आक्षिप्तचेताः विचरामि नैतिकी
नाथांशुमत्सापिन चारुतागतिः ।७३।

चन्द्रोऽयमानन्दममन्दमेतिकिं
रात्रौ स्वमायाचरणे पटुर्महान् ।
सेवामलोऽयं परिणामभावतः
सर्वैः तृतीया प्रकृतिर्न साधिता ।७४।

अत्रस्थलोकाः धनिकाः स्वयंप्रभा
वाञ्छाप्रदास्ते कुशलाः स्वकर्मतः ।
कुलानुकूल्यं न गताः विभावसाः
साम्यंधृताः साधुजनैः सुपूजिता ।७५।

नत्वा शिरस्ते त्रुटिशोधशालिनः
सर्वे स्वकाव्यं चरितुं ललायितः ।
किं शल्यभावेन मनांसि बोधयन्
संज्ञाप्रशस्तो न महैभतुलियतः ।७६।

प्रथमबुधगणे संपूजितं निर्गुणत्वं
कृतसगुणचरित्रं कालगतानुरूप्यम् ।
अहरह इह शान्त्यै प्रार्थनामोंकरोमि
निखिलजगति च श्रेष्ठं सुदाम्नश्चरित्रम् ।७७।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये भार्यानुनीतिर्नामा एकादश सर्गः समाप्तः ।

# ॥ द्वादशः सर्गः ॥

निशम्य वाचः गदिताः स्वभार्यया
विधातुमानीय धनं मनोरथम् ।
अशक्नुवन् कर्मसुपूरणेऽपि सः
विशंक्य मानी न चकार तत्क्षणम् ।१।

न गन्तुमिच्छाम्यधुना विमानिनं
वृत्त्यर्थमाशासहितो धनाहितः ।
विपन्नकाले धननाशहेतुना
न गम्यमस्तीति सुहृद्गृहं जनैः ।२।

धनं करोतीह गृहेऽपि शत्रुतां
प्रशस्तदुःखाय मतं सुगोपनम् ।
अतो हि मानस्य धनागमान्तरे
प्रयोजनं नास्ति धनस्य मानिनः ।३।

अजिह्मवृत्ति ह्यपि जिह्मकारिणीं
वलीयसा तां जनदुःखदेवताम् ।
तपोबलेनार्जितबुद्धिहारिणीं
श्रियं समागम्य न को मदायते ।४।

स राजराडस्ति नृणामगोचरो–
न गच्छति श्रीर्दयिता प्रमाणिता ।
चराचरः कांक्षति यस्य दर्शनं
कथं वयं तत्र समाहितेच्छवः ।५।

सुखोद्भवा या परमानुकम्पिता
कृतानुपूर्वा भवतीह मित्रता ।
यया जना अत्र भवन्ति तेजसः
प्रदानकर्त्ता सविता च नाशकः ।६।

स्वयं कृतं कर्मविनष्टसाधनं
धनेन हीनञ्चतदा समायते ।
तथेत्यसम्भुक्तपदं न चेद्धनं
मदस्य गेहं जगतीह मण्डनम् ।७।

धनेन विद्या न परस्थ मात्रिका
कृतो न सौंदर्यगुणः स्वभावितः
बलं मनोभावसमुद्भवं भवे
समिश्रितं दुःखलवं धनेऽधने ।८।

विधिर्यदि श्रेष्टपदं विधानजं
न वित्तसिद्धिः परमोत्तमासमा ।
सुखी सुखी दैववशात् क्वनामकः
शरीरिणां कर्म करोम्यहर्निशम् ।६।

समाजनीतिर्धनमीहते यदि
कथं सुकारुण्यरूपः सदुर्बलः ।
सता सदौचित्यविचारशालिना
प्रफुल्लदेहेन मनोहरायते ।१०।

मनोरथागारपरः समन्ततः
कदर्थयत्येकदिने समागते ।
ससंभ्रमं कार्यमनुत्तमे न चे-
दुपास्यते ज्ञानिमि[illegible] ।११।

चिराय दुःखस्य मितिर्न भाषिता
कथं न धैर्यं सहसेऽल्पकालतः ।
कदापि गन्तव्यमहो तमेव कि-
मतीत्यवर्षं गमनाय निश्चितम् ।१२।

भयावहा सा नृपनीतिनर्तकी
ततो दरिद्रः कथमेतु सन्नृपम् ।
समं समाकांक्षति मैत्री मानिनी
ददाति सानन्दमगाधजीवने ।१३।

गताखिलेहा परमोत्तमाः सतां
तपोभृतो ज्ञानविरागदे वने ।
तुलास्वभावैः परमार्थचिन्तकाः
दरिद्रराजाः सुखिताः निसर्गतः ।१४।

सयत्नसंपादितमानसाधनैः
गुणानुरक्ताः महिला श्रियः शुभाः ।
सुनिष्फलं कार्यमकालिकं यथा
तथा जनस्यार्थितभोगसंगतम् ।१५।

न वाञ्छितात् सुस्खलिताः बिकत्थनै-
विहाय लोकाश्रयतां यशोधनाः ।
ततोवनं वन्यफलाशिनो गता
वयं समाजे स्वयमेव दुःखिताः ।१६।

सरोवरः यत्र हि किञ्चदिच्छति
नरोत्तमः ज्ञानवशवदो हतः ।
धनादयस्तेन बिरोधिता गताः
यथाऽहमद्याविरतोऽस्मि च ।१७।

उपागमे भाववशे प्रियं प्रति
स्वकार्यसिद्धिर्भविता न संशयः ।
धनार्थिना विज्ञजनेन कालिको
विधिर्विधेयो विविधं विधानतः ।१८।

श्रियःश्रयी नास्ति महानुभावुकः
शठानुकूला सुखसंततेर्गतिः ।
यमामनन्त्यात्मसमं नराधिपाः
नताननस्तस्य नयेन मानवः ।१९।

सनातने वर्त्मनि भावनाश्रिताः
जना न याञ्चाव्यवहारशिक्षकाः ।
अतः प्रिये ! प्रेमवचोविभूषिते
विलोभलाभं परित्यक्तुमर्हसि ।२०।

विभूतिलोभः परमो भयान्वितो
मुधा न ध्येयो भवतीभिरापदि ।
रराज राजा न तु लोभभारितः
पुरापि किं सत्यमिदं न भाषितम् ।२१।

सुपुष्पितं वन्यफलं समादरं
समाजलोके लभते न चेतरत् ।
स्पृहा प्रभाता न तु सांध्यगाथिका
प्रशान्तिदातुश्च विभावसोः श्रियः ।२२।

विनीतवेगा सनयानुसारिणीं
शुभा बलाभावमनोहरायिता ।
कथं न तामेव मतिं च कामये
र्विचिन्तिता या शुभदायिनी सती ।२३।

यशो नवीनं सुवयोऽद्य मानवे
सदा प्रदेयं सुखदुःखकारणम् ।
विद्यावधानं विवधावतारणं
न जीवनं प्रेम विना हि कस्यचित् ।२४।

न दोषयामि श्रुतशालिनीं मतिं
धनादिभिः संसृतिसंबलैर्मलैः ।
सदा सुसेवासदनेषु मानिनः
वसन्ति मानोज्ञकमुद्रिकासमाः ।२५।

स साम्यसिद्धौ प्रथितोपकारको
गुरोर्गृहे प्रश्नचये समागमे ।
अथापि किं राज्यमदाधिकारिणे
विभावनाद्या प्रलयं प्रयाति सा ।२६।

ग्रहोऽस्ति वाचस्पतिभावनागते
गुरोरधीतीद्युतिदीक्षितो नतः ।
गुरूपदिष्टेन पथा न यो जनः
सलक्षण याति निशापतेर्मतेः ।२७।

अनन्यचित्तेन भवेच्चिरन्तनी
चिरायते भावततिः सुभाजिता ।
सदौपदेशेन विचारणावशा
मरीचिमाली किमु शीतलायिये ।२८।

कुलांगनेयं सचला तनुश्रिया
मनोगतं मानयते हि सज्जनम् ।
गुणानुरागैश्च विभूतिसंचयैः
ददाति मानेऽपि विलोचनोत्सवम् ।२९।

निमील्य चक्षुः प्रमदाः नवाङ्गनाः
निपातयन्त्यः सुलताः समोदिताः ।
शशांकशंकां जनयन्ति मानसे
दिनावसाने च समागते प्रिये ।३०।

निवेद्य सर्वं निरवद्यमानसः
कुशाग्रधीः यद्विनयेन भाषते ।
समीहितं तद्रभसातिरेकतः
विधातुकामः शुभशंसिनो जनाः ।३१।

स्वरूपभावे स्थितमानसो नरः
गतोऽनुतापेन विदाहशालिताम् ।
विलिप्य मर्माणि धुनोति वाङ्मयम्
सितायते वाचि चरित्रनिर्मलम् ।३२।

प्रियाजनानां परमा सुशारदा
सुलभ्यते यत्नपरेण शारदा ।
समाधिमास्थाय मयाप्तसंगति
त्वया समं सर्वसुखं भविष्यति ।३३।

समानरुपैः सुलभा यथामति
विकालमध्येसुपरोक्षिताशुभा ।
शरत्समाना प्रमदा जनानां
प्रभागतिः योगिजनाय भूतले ।३४।

पदाम्बुजं पूज्यमतीव रम्यं
धनांशुभिर्नास्ति मतिः परार्था ।
धनाप्तिरस्तीह विमुक्तिसाधनं
हृदार्णवे सद्गुणरत्नदायिका ।३५।

पवित्रतां रक्षयितुं महाजना
वसुन्धरायामखिलां सुसंभवाम् ।
रसातलाल्लान्ति वपुष्मतो रमां
प्रशंसनीयाः समतां गताश्च ते ।३६।

नभो विभागेऽपि वयो न ते क्वचिद्
विलोक्यते सौहृदसगतिः खगः ।
तथापि ते कीर्तिकलामलांगनं
विभासयत्येवमशेषमण्डलम् ।३७।

सुरम्यवायुमधुरः कृतो मुदा
सुमाञ्चलं धारयतीह सर्वदा ।
मनोहराभा सुभगा सुखाकरः
वसतकालः परमो विराजते ।३८।

प्रणीतकाव्याः समये विशेषितो
विवासिताशा जनताहितेच्छवः ।
निरादृताः साम्यकृति सदा नये
प्रदातुकामाः सदयाः सुतत्पराः ।३९।

स्मृतिगुरोः सा बहुशो प्रयाति कि
तथापि नास्ते दिवसोगतः परः ।
मनः सदेवान्यगतं परार्थितं
परं गतं पारमुपैति लौकिकम् ।४०।

विरज्य लोकात् सुहृदान्मनोहराद्
वने निवासं कुरुते महाजनः ।
वयं न दुःखं ससुखं सहामहे
परिच्छदज्ञा वसतिः सुगर्हिता ।४१।

अगोचरा सा सुमतिः पराहता
जनो न हीनोऽपि भुविस्खलायते ।
उपोढ़चिन्ताविषयैः प्रबाध्यते
सुमानसस्था वनिता तपस्विनी ।४२।

प्रहेलिकायां मनसा विलीनतां
विधाय लोको न सदारचिन्तनात् ।
स्वमानसं मानसरोवरस्थित
करो त दूरं सदयानुरञ्जितम् ।४३।

लिपिर्विधेः सा नियतापि सर्वतः
कदाचिदत्येति दृढानुसंगतः ।
सहानगीतिश्चतुरानुरागिभि—
र्विगीयमाना हरते सुमानसम् ।४४।

वदान्यलोकोऽपि दरिद्रतांगतो
धनाय शास्त्रान् मनसा विरज्यते ।
विलोक्य सत्यं प्रमदावभाषितं
मनः सुदोलाभ्रमणं चकासते ।४५।

लचीयसीं लौकिकभावनाश्रिता
प्रवृत्तिराद्या समयानुकूलजा ।
वशीकृता रोधवशा प्रवाहिता
विकासमाना हृदये विराजते ।४६।

भयंकर मृत्युरणंविलोकितं
जनो हृदा सानुशयो मदायते ।
ममापि चेतः सदयं समाजतो
विरक्तिमासादयते कदाचन ।४७।

प्रयोजिका प्रीतिकरी महोदया
सुमित्रतायाः परिचायिकागता ।
निशागते गन्तुमनाः विरागजः
स्वकीयकार्यं चरितुं समुत्सुका ।४८।

मरीचिकायां तरसाभिलीनतां
मनोबिधाने भ्रमते दिवानिशम् ।
समाननायाः परिदर्शिका रमा
कदापि भूता नहि सा भविष्यति ।४९।

वृथा मनो मे प्रियतावशंगतं
बिचारवंशस्थविलं विरज्जितम् ।
पुनातिनाम्ना प्रभवानुलेपतः
स्वतंत्रता काल्पनिकी विभासते ।५०।

भृशं जनः संकटकालसंस्थितः
कृतिं समाजे कुरुते प्रयत्नतः ।
ममत्वकारेण विनायकेंगितं
विधायितव्यं कुशले सुकालिके ।५१।

महीयसां युक्तिविदां महात्मना
मसंभवं नाम न किञ्चिदस्ति किम् ।
समत्र साध्ये प्रथितार्थसाधना
मुदाविरक्तौ प्रवसन्ति सज्जिताः ।५२।

शिवापुरी या भवमुक्तिदायिका
न तत्र कश्चिद् विभवस्यविस्तरः ।
विमानिनां सद्गुरुनामधारिणां
गृहेषु विद्वाद्प्रथितागमेषु च ।५३।

सुधी स्वकाव्यं रसनिर्झरैर्झरैः
ग्रथ्नाति भाग्यस्मितगौरवादृतः ।
न कास्ति या सर्वविदा न लभ्यते
ततो विधेया समयानुकूलता ।५४।

रमांगणे वैरयुता सरस्वती
कथं सहेऽहं सुकृतापसारणम् ।
तयैव धन्यः समरेखयांकितो
विहारशीलं हि मदीयसौरभम् ।५५।

समस्तकाव्ये समये सदाशये
नयन्त एवविबुधाः वयोऽधिकाः ।
व्रजन्ति धाम्ना महत्तोत्तमं पदं
स्वकार्यहेतौ फलता प्रतिष्ठिता ।५६।

मनुष्यनामा पुरुषोऽयमन्तरं
विवेकभावे लभते जीवान्तरैः ।
अतः श्रद्धा मे न धने विजायते
समूलनाशाय नरो न याचते ।५७।

परीक्षया यः समयेषु पाकतां
विभाव्यते सः सरले पथिस्थितः ।
सुराजतन्त्रे परिपूजयार्चितः
सुजीवनं यापयते महाशयः ।५८।

सुवर्णकान्तेर्विरहाकुलो जनो
नवीनतां कांक्षति मार्गशोधने ।
न तृप्तिरायाति कदापि मानसे
न जीवनं तस्य सुधामयं गतम् ।५९।

दिनानि रम्याणि महाविभूतिभिः
प्रतीक्ष्यमाणानि न संशयोऽधुना ।

तथापि सासेचनिका मनोगता
दरिद्रता साधुकरी विराजते ।६०।

महात्मनां कीर्तिधरास्वभावतो
विभूषिताऽऽभावमयी पुरो यथा ।
तथैवदिव्यं वरदानजीवनं
मया विलभ्यं सुखदं विभाव्यते ।६१।

शठान्तभावेन महाजनैरयं
जनेषु पन्था विहितो स्थिरायति ।
तमेव लब्ध्वा गमनं वरं पुरः
स्वतः समीहानुभवानुरंजितः ।६२।

मनीषिता बाह्यगताविशुद्धिजा
विभावनायां श्वसिति प्रवेशिता ।
समाजसंस्कारपरः सरागतो
न वित्तवन्तं कुरुतेऽर्चनां तताम् ।६३।

सलीलयानं जनतापदूषितं
धनेन लभ्यं विजने विचारिते ।
विहातुंकामेनविरामनिश्चये
व्यवस्थया दूरगतिः समर्थिता ।६४।

पितुः प्रयत्नैः शिशवोऽन्ततो गतिं
विहारकालेन वयोऽधिकेऽवनौ ।
हृदः सुयोगाल्लभते न चान्यतः
समीहया मेऽस्ति मतिः व्यवस्थिता ।६५।

त्वयाप्रियाया सुखशान्त्वनाभया
वियोगभावो न वरोस्ति भावुके ।
धनेन नीतिः परमादृता यथा
तथा न मे मानस[illegible] सा ।६६।

दिनं मदीयं सुखपूर्वकं गतं
जनोपकराय विकल्पितं परमं ।
विहाय त त्वं तु समाजबन्धने
समादृतां गन्तुमनर्हिता सदा ।६७।

विभागता रात्रिमिमां निशाम्यनु
वयं सुसुप्ति न विहातुमर्हिता ।
गतिः समेषामियमस्ति तत्परा
हृदानुसिक्तेन वदन्ति लौकिकाः ।६८।

भरं समाजस्य समुद्वहार्थिकं
जनः सदाचिन्तयतेऽनुमानतः ।
तथापिदोषो विधिना प्रदीयते
सुतोषभावे परमादरो महान् ।६९।

मनः प्रदीप्तं सुखसागरोद्भवां
विचेष्टतेसद् भुवनागतां ततम् ।
प्रसंगतो मे कृपणं नु शेवधिः
सदिच्छया निःसृतमानुसंगतम् ।७०।

समाप्ततोषाः धनचिन्तकाः जनाः
सुखाय दुःख महिमावलिभिः ।
सदासता सगततो विमानिनः
विभावनायां सुमतांगताः परम् ।७१।

निवृत्त्यलोकात् चरमे मतिर्गति-
र्मनः सखेदं सहते व्ययं नहि ।
विजायते मुक्तिधनो स्वभावतः
स्वकीयमर्थं नयते लक्ष्मोःप्रदम् ।७२।

श्रितान्तरात्मा परमात्मनः पद
विनापि यज्ञं ब्रजति स्थिरायति ।
धनस्यरक्षा बहुकष्टकारिका
विनाशमप्यार्थितंकटाकुलम् ।७३।

वरं विधातुर्नियमं वरेण्यतां
समासयद्देहधरेषु भावनाम् ।
तथैव नित्यं परमापदां पदं
तरन्ति साहाय्यतरौः विधायकाः ।७४।

मित्तार्जितं द्रव्यमदं नु लक्षितं
तथापि शान्तिर्नहि मानसेऽस्तिकिम् ।
विहाय सर्वं वनगामिनो जनाः
विभान्ति धन्याः हृदयस्थचिन्तने ।७५।

स्मृतिर्नु मान्या जगतीतलेऽचले
स्वकाव्यहेतोः समुपादिता मया ।
जुहोति तां हव्यमयीं धनागतिं
परोपकारे तनुधारिणां नराम् ।७६।

धियाभिषेकं प्रतिभातिशीतले
जले च सायं यमुनानदीगते ।
कथं खगाः गायनतत्पराः मुदा
निदाघकाले सुखभाजन सदा ७७।

श्रवोऽनुकूला परशान्तिदायिनी
सदा नु लोके भवतीह मित्रता ।
सुमित्रता प्राप्य समानकालिका
कथं हि नारी सहते धनाहितम ।७८।

कलरवपरिबाधायाति सर्वातिगेऽपि
नहि बिचलितशक्तिः कापि विश्वाऽन्धकारे ।
भवति हृदयदाहं कर्मणा सज्जनानां
भवनिखिलसुभावैश्चेतसाचापि शुद्धः ।७९।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये भार्यानुनीतिर्नामा द्वादशः सर्गः समाप्तः ।

# ।। त्रयोदशः सर्गः ।।

समता ममता विरोधिनी
परिशिष्टे परिधौ परस्परम् ।
विदुषे समता सुवाहिनी
समुदिष्टा न करोमि भावतः ।१।

अवशोऽपि जनो नियोजितः
कुरुते कार्यमहोऽसमानते ।
प्रकृतेर्नियमः सहायकः
जगति ज्ञानमये परायिते ।२।

जनुषः सुलभं स्वतः मनः
स्वसमीहा बलबाधिका परा ।
विहितं प्रबलं न हीयते
परमज्ञातमशान्तिकरं सुखम् ।३।

रमणी जगतः किमन्यतः
नवनीतं परमादरे महत् ।
तव का सुकथा महोत्सवे
सफलं जंगमतंत्रकंहितम् ।४।

अमृतस्य खनिः प्रियाजने
वसति ज्ञानविवर्धने बले ।
चपलाऽपि प्रकाशदा दिवि
सुनरे किं न करोति सा प्रियम् ।५।

विनयें प्रथमं सनातनं
बहुशः लोकयशः समायते ।
बिरहं ललितं तनोति या
ससुखस्याकारिका हि मूढता ।६।

शिशवे शिशिरं वितन्यते
मनसा नाशयते गुणः सदा ।
वहते जलतां मिलायिते-
ऽनिललोभे जगतीतलेऽचले ।७।

श्रवणे मनने तपस्कृतौ
समता हृष्यति लोकतो नरे ।
सुपथं कथितं नरोत्तमे-
चलनं चारु न संशयो महान् ।८।

अयमेव जनो वरीयते
पुलिनं यत्नभरैः समागतः ।
सुजलं तरितं सुशाहसै-
र्धनिको मानिमनः सुराजितः ।९।

उभये भवतो गतीनरः
सहजं रोधमयं च जानताम् ।
विदुषः सहजं न राजते
खलके रागकृतं यशस्कृतम् ।१०।

विजगाम शमं शुभागमः
समये धामविरामसंहृतौ ।
विदलो विजने विदग्धया
सुखितः सः समवाप्तपौरुषः ।११।

महता क्रियते कृतिः परा
शुभदा लोकजनापूता सदा ।
परमादरभाजमर्थजं
जनता प्रार्थयते मनोगतम् ।१२।

विजहीहि तनोर्विलासकं
चरमं चिन्तयतो हरिं मुदा ।
कमला तव भाग्यधायिनी
पथिकस्यास्तु मनोविनोदिनी ।१३।

वहवः सुजनाः मनोहराः
जगतोऽलंकरणाय सुस्थिताः ।
धयति हृदयं सुधारको
न विदूरो भव सत्त्वतो गुणी ।१४।

दिवसाः विगताः विभान्ति नो
समये कृत्यविधानदौचितिः ।
चपल भवनाञ्चितं पदं
कठिनं देहविदाहनं प्रिय ।१५।

निहता मनसः कुभावना
जयिना जर्जरितात्ययकल्पने ।
जनिरस्य फलायते मुहु-
र्द्रवतो दुःखिजनस्य भावतः ।१६।

लपितं बहुशः कथानके
श्रवणं विस्तरतो विगर्हितम् ।
सहते वहुधा बलान्वितो
जगतो जीवितन्त्रभावनम् ।१७।

लघुता सहसा विभाति किं
मुनिमेधा नयपक्षपातिनी ।
अत एव जनः परस्परं
सहते विह्वलतां तमसान्विताम् ।१८।

रुचिरं भवनं विभाति यन्-
ननु तस्मिन् रमते महामतिः ।
विविधाकृतिमान् सहायको
गुणतो लोकसमाश्रिता छविः ।१९।

विफलोऽस्ति धनाशयो वरः
शुभकारी कमलामला कला ।
रुचिरेण शिलातले स्थितः
परितेने शुभतानवं नवम् ।२०।

तरुणा तरुणारुणः खरः
समुदं भारधरेण सह्यते ।
पुरुषः स्वजनेन घर्षितै
भवने कः कुशलेन तिष्ठति ।२१।

मृगणामठिकाः तपोनुदा-
मपमानं विपणौ सहामहे ।
महतां नियता परार्थता
विभवोऽयं लवशः परायते ।२२।

शरणोपगताय रक्षको
भव लोके करुणामयोऽमयः ।
सहसा न वृणोति मानदः
यशसोऽर्थी [illegible] ।२३।

अविजित्य हृदः प्रभावजं
सुजनस्यास्ति गतिर्न शाश्वती ।
यदधीतमनेनसा कुरु
शुभविद्याफलमेतदेवहि ।२४।

मृदुजीवनयानमारुढः
क्रमशश्चेतसि भावसंकुले ।
पटुतां परिलब्धुमिच्छया
विभवे यत्नपरायणो ब्रज ।२५।

स्वयमेव प्रवृत्तिवर्धिताः
प्रियतालब्धजनस्य मानिन ।
भुवने भव सात्त्विक श्रय
निखिलं भूषयितुं कुलोचितम् ।२६।

विधिहस्तगतां परम्परां
शिरसा को नहि सेवते कृती ।
प्रकृतिर्मनुजस्य संस्थिता
परमाधारभवा परार्थिता ।२७।

शिरस सुभरं विपद्गतं
सुमनः कष्टकरं विभावितम् ।
तृषितं दधते सदादृता—
स्तटिनीसंगतिमेति तत्त्वत ।२८।

तनयारिरिपुणा सुमार्जितः
सुभगस्यास्ति महान् यशोनिधिः ।
क्षतिपस्य सुकर्मबन्धनं
वहते लोकमतो वियोगिनः ।२९।

नियमानुगतो महाजनो
लभते चेत् कुकर्मण फलम् ।
भवता तु कथं न भुज्यते
विधिदाहः परमो भयान्वितः । ३० ।

जलदो जगतां जनार्दनः
कृषिसेकं कुरुते नियोजितः ।
अधुना महतामुदारधी-
र्निखिलान् पालयते सुसत्वरम् । ३१ ।

माननीयाः जनाः सादरं मानसे
विश्वमध्येस्थितानां सुखंसाधनैः ।
सेवया धर्मकर्माणि संपाद्य ते-
ऽनामतो भान्ति धन्यास्पदं भारते ३२ ।

निर्मलाते वृत्तिलोकगा भाति या
भाषया संनिवद्धा न भारंगता ।
सा समाजस्य लब्धिः कृतिर्मानवै-
र्गीयमाना चरन्ती सदा सर्वतः । ३३ ।

सागरो गर्जति मानसमानतः
नास्ति गंभीरतायां समानास्पदम् ।
किञ्चिदत्रास्तृते भावनाभाविते
लोककल्याणसारे भवाभाषिते । ३४ ।

मानुषो देहधारी हृदासिञ्चितः
कारणं सर्वकृत्यस्य लोकायते ।
सिद्धिराद्या समायाति सेवार्चना
शैवभावो सदा शान्तिदो भ्राजते । ३५ ।

स्रग्विणी शोभते हारलम्बा हृदि
भावना भाति पारंगता मानसे ।
सामनीतिः फलां पुष्पिता मेदुरा
नैतिकीयं ते नाशैः कदाचित् पृथक् ।३६।

उपकृतवरनारी विप्रलाप श्रुवाणः
गृहनिकटमहो ! संकीर्णभूमि परेषाम् ।
अवसितमुटजं त्यक्त्वा पद्माक्षि सुदामा
अवकरयुतवल्मीकं कुपन्थं जगाम ।३७।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये शिक्षणनामा त्रयोदशः सर्गः समाप्तः ।

# ॥ चतुर्दशः सर्गः ॥

मामानतुं सभयसांध्यगते सुदाये
किं साकरिष्यति विभावसिते सुकाले ।
तापं तनोति शशिमत् शुभतांगतेऽस्मिन्
ईर्ष्येरिता क्षणभरं ममतामयीयम् ।१।

पृष्ठेन दृश्यरमणीयतरा सहर्षा
सा संनता गृहभरा शुभदा विभाति ।
तस्याः स्थितिर्भवति किं मयि दूरदेशे
नाहं विचारचरणे सफलाभिलाषी ।२।

चण्डातपोऽधिकृतमं तपते रजन्यां
चन्द्रः स्वभावविधुरोऽपि विलोक्यदीनम्
पत्नीं विना विरहदावभरे सदेहे
सा कोमला सरतु किं गृहभीतिकातः ।३।

संश्रूयते कलरवं वयसामरण्ये
चाकर्ण्यते मधुलिहां मधुरोहिरागः ।
आयाति यत्र सुरभिर्ननु गन्धवाहो
मन्ये वसन्तसुषमा विविधाविभाति ।४।

तां साधिकार मनसार्व्रावमीह लोके
का वीरता त्वयि विराजयते सदर्पा ।
नीतौ विशारदपरो भवतोऽनुयागो
नष्टा त्वदीयवलता परुषान्वयेन ।५।

तात्पर्यवद् विषयतां परिहायलोकः
स्वं जीवनं शपथवत् कुरुतेऽधिकारैः।
किं नो विना शरदि हंसगणस्य शोभा
साऽऽयाति सारवसुधाजलतातिरिक्ता।६।

गूढाः द्विषो गगनपुष्पमयाः हि तस्य
देवस्य कार्यमगमं प्रकटं करिष्यन्।
दैन्यं विहाय भुवि यद्रमते सुदेशे
लोकान्नतीत्य परमं शुभशौर्यतेजः।७।

कान्तं वियुक्तमवलोक्यचिरं वसन्तं।
हर्षंगता वनलता वन्तितेव सद्य।
चन्द्रानना नवबधुरिव रम्यरूपा
या भाति संततमहो ऋतुराजलक्ष्मीः।८।

ग्रीष्मः सदा भुवनतापकरः प्रसिद्धः
श्री कालिदासकविताऽनुमतोऽयमास्ते।
जाने तथापि कथमद्य मनुष्यनामा
लोके जनास्तदभिलाषपराऽमुखाः हि।९।

राकागते युगलबाहुलता विधत्ते
पूर्वोदितेन वचसा शयनं विहाय।
सत्कार्यशासितसुधामधुरेण वाचा
देशं विरूपतवती नयनाभिरामम।१०।

ग्रासाय दीर्घतममृत्युमहारण तं
कस्यास्ति मानसपवित्रं विदीर्यमाणः।
लोको निरीक्ष्य कुरुते नयमार्गरोधं
का वा भविष्यति गतिर्न वयं प्रतीमः।११।

वाक्यं प्रदाय शिशुताहरणे समर्थः
को लोकलोचनमयो वसुधातिशायी ।
कार्यं किमस्ति महनीयमयं सुलोके
इत्येव वाञ्छति मनः समये विलीनम् ।१२।

पुष्पाञ्जलिं बिकिरतां वनदेवजानां
यत्रास्ति शोभनकला परितोषणाय ।
गूढं निसर्गसरलं हरिणांगनानां
भर्तुः शिरः कुटिलखुर्जननिष्क्रियत्वम् ।१३।

सभारशीलशिशवो वयसामनन्ताः
मर्यादितावयवनेत्रपथाः गताः ये ।
पत्रान्तरे सहृदयेन जलाभिषेकं
दत्ते सुवंशसरसः पथि तान् विनीत्वा ।१४।

भ्रूलेखया यमितशैन्यचराचरोऽयं
यस्यास्ति कीर्तिरतुला प्रसृतांगणेषु ।
तस्यैव भक्तिसुलभास्तसमस्तदोषाः
पारंगताः भुवनचिन्तनतोऽपरत्र ।१५।

लावण्यसारजलता कमलाकरेषु
कीर्णाञ्जलिर्भुवनपुष्पमयी विभाति ।
कार्श्यः शर्शर्धवलतामधुरातिशायी
चित्ते विधानजनताः भ्रमणे विलग्ना ।१६।

सेवाश्रयैः कुमुदिनी रजनीगताऽपि
चातुर्यतः कतिपयान् पथिकान विनोदैः ।
संतोषदानमभयं कुरुते विकाले
मृत्स्नैः समतं सुखदानवती विभाति ।१७।

सद्भिः समं वसति योऽनुदिनं प्रसन्नः
सद्भावना हृदयमध्यधरः सुविद्वान् ।
तस्मै न लोकमिदमस्ति वसन् समाजे
क्षाराप्यहो परिणता मधुराम्बुधारा ।१८।

व्यक्त्वा सुखं गृहनिवासकरं स्वतन्त्रं
विद्यार्जनं गुरुगृहे कृतवान् सयत्नैः ।
देशस्य रक्षणमतिर्धृत वन्धुदु खो
नेतुः पदैः सुजनता प्रथितः सुदामा ।१९।

घेयेख्यातः प्रकृतिसुभगो गीतिभिर्गीयमानः
उद्यानेषु प्रणयिनिजने साग्रहं सुप्रतीक्ष्यः ।
वृक्षो यत्र प्रसृतगहनो जीवयुथातिभारः
कामस्यासौ सुखमयसखा सर्वभाषां विलासः ।२०।

कौशल्यार्थं जगति सबलास्ते जनाः धन्यवादै
सर्वैः सेव्याः सहृदयजनैर्ज्ञायतामिन्द्रदेवः ।
हे लोक ! त्वं कथय मनसा कोऽस्ति नम्यः परो यः
यस्यस्तित्वं स्वजनमभितोधिक् कुर्वनैरतं तम् ।२१।

त्यक्तः सर्वैः परमरमणो देवतुल्यो मयाद्य
तेनाप्यर्थं नवलवसतौ दुर्लभं वामलूरे ।
कार्यं कस्मै क्रूरकमतिभिः प्राप्यलोके प्रसिद्धम्
ये नत्तिव मदनभरितैः साम्यमाप्यानुविद्धम् ।२२।

मातगैर्योगिरिसमतया पूज्यभावे विलग्नः
कीर्तिः सान्द्रीं मुखरमधिकं देवलोके करोति ।
श्लेषाः द्विष्टाः अमरवसुभिः प्राप्तसर्वा. सुरक्ताः
सत्याचाराः भवतवसतां सेवकैर्घंष्यमाणा ।२३।

यंत्रागारे नयनधनवतः सादरं पूज्यभावं
सर्वेषां यद्भवति महतां नास्ति संदेहलेशम् ।
हेम्नोजालैर्भरितविभवो लोकतः पारगन्तुः
शोभातेषां नहि समगता सौम्य! किंवामृतेन ।२४।

विश्वस्तो यो विकृतिरहितो भावनानां परिधिः
नारीलोकः प्रमुदसहितो दुःखहेतुर्न कश्चित् ।
धर्माधारे मनसि तपसा मानवो यः सशक्तः
शोकागारं जयति जननी तस्य मृत्योर्गतेऽत्र ।२५।

भूयो भूयः श्वसितिबहुलं सारसंसारवृत्ते
शोकोर्मीभिः रजसि विलयं प्राप्तवैराग्यरागम् :
मन्दाक्रान्त्या चलितविभवो मोहजालैः सचेतः।
धीतोयत्नैर्मुखरितरुचेर्दूरमम्भोनिधेः किम् ।२६।

आर्द्रैर्भावैः पुलकितपुटैः सौम्य मौनाननं तं
संसेवन्ते विपुलनयना लोकनिन्दां निषिद्धाम् ।
एकान्ते यां मुदितचलिता देहदाहं करोतं
प्राप्यावासं गणितवयसा तेन किञ्चिन्न कार्यम् ।२७।

सर्वेषां यत्कृतकमतिभिर्भासते लोकशोके
तस्यान्तं कः सहृदयधुरौ गन्तुकामा समाजे ।
धन्योवंशः श्रवणपथगः कामिनः काममाने
उत्कृष्टोऽस्तोक्षितिधरसमं सेव्यतां याति लोके ।२८।

घोषोऽयंते जलनिधिसमं श्यामवर्गोविभाति
सौरं तेजः प्रथितमहसामागतं यत् सुवर्णम् ।
शार्दूलानां करिकुलभतां प्रापणं किं प्रयत्नै
श्रुत्वा सर्वं नयनविगमं प्रस्थितो लब्धकामः ।२९।

ख्यातो लोके जलनिधिगते साध्वसं पारगामा
वेगेनाप्यं स्फुरितकमल प्राप्यते यत्नसारैः ।
बुद्धिस्तेषां भवगुरुपदे तिष्ठतीति प्रमोदैः
संदेश तत् क्षितिधरतटे प्राप्य दाह करो त ।३०।

दीर्घे लोके सलिलगहने सत्वरं गम्यते यैः
तेषां कीर्तिः प्रसरति सदा मानवे तेहि धन्याः ।
तूष्णीं भावासहनकरणे येऽधिकाभावमग्ना
संस्कारं त मनसि ददतेदानवस्तस्यदासः ।३१।

अत्याचारैर्विरलजनकः शान्तभावाधिकारी
दुःखागारेऽनवरतवशी शाम्यते सर्वकामम् ।
तत्र क्षुद्राः हृदयवसतिः मेघमालां चिनौति ।
आदेशार्थं भ्रमति मनसा जीवलोको मदीयः ।३२।

सर्वत्रास्ते मदनभवनं कुत्र जायेत दीनः
को लोकेऽस्मिन् स्मरति नवलं देवलोकं विहाय ।
भूतिः सर्वा परिचयकरे लाभदात्रीति युक्ता
भूयो मन्द हसति तपसा योगधारी कवीन्द्रः ।३३।

कैवल्याक्रोशितानां रचयति मधुरालोकदैन्यं सुखांशं
सृष्ट्याः हेतुर्विशिष्टानुभवलवशरीरो मनोलेशितात्मः ।
आविर्भूतः सेतुकर्त्ता जलनिधिमपिसुगम्यं करः साधुरक्षः
आत्मस्थः सो मया मात्रसफलकवितारम्भगे नम्रकाः ।३४।

प्राथ्यनामग्रगण्यस्तुदति परगतः शान्तभावाधिकारी
प्रांगणो दृष्टिनिपाताऽपकृतशतदिनो धन्यभागस्य घाते ।
तस्मै पित्रे नतोऽयं खलु नवसुतपदो मूर्ध्नि धूल्यांकितांगो
बाल्यामर्षेण देहावगतशतवलो दुःखदाता खलेन्द्रः ।३५।

चैतन्यरूपेण परोविभावी
मुक्तामणिः योगमयं तनोति ।
तेजः प्रदीप्तं सकले वनेऽस्मिन्
तपः सुसह्यं न किमस्ति लोके ।३६।

सुगन्धमादाय चरन्परागै-
र्नवारविन्दं नमते मिलिन्दः ।
प्रतापतापैस्तपते तपस्वी
कलावती कल्पलता सुजाता ।३७।

या नर्मदैव प्रभवानुलिप्ता
सभाजना सामरकंटकेव ।
परस्परं प्रियतरा नतेभ्य
आद्यात्रिदेवा सहसा विभाति ।३८।

कुशस्थलीं प्राप्य सुरोऽपि मानं
विहाय तत्रावमितुं सयत्नाः ।
प्रमाणयन्तीव महेश्वरं याः
विभूतयस्ताः परितो प्लवन्ते ।३९।

सन्ध्यागते सूर्यविहारकाले
तेजस्विनामग्रसराः शरण्याः ।
तिष्ठन्ति सर्वे रतरामचन्द्रा-
स्तुष्णीं समाधिं समुपर्तुकामाः ।४०।

रात्री शरच्चन्द्रकलावतीयं
देवांगनासिद्धमिद वन च ।
पुष्पं मनः शान्तिप्रदानमात्रं
तपोधनानां प्रगतिः सुरेजे ।४१।

आकर्षितां कान्न करोति सुष्ठु
सारण्यभूमिः श्रमदैवलभ्या ।
एकान्ततिर्दुःखविलायितास्यः
निर्वैरजन्तुर्वसति स्म यत्र ।४२।

शरत् समाश्रित्य विकासभाञ्जि
सुमं प्रफूल्लं ककुभां विभाति ।
तपस्विनः तापसुधर्षिता च
श्यामा वने कुञ्जगता विरौति ।४३।

सरांसि मन्दं विधिना तदानीं
प्रवाहपूराणि वहन्ति यत्र ।
खगाः समागम्य मनोविनोदैः
स्वैरं भ्रमन्तीव समुल्लसन्ति ।४४।

किमस्ति भूम्नि शरदो मधु वा
पतत्पलाशो न विचारणीयम् ।
मदोत्कटाः सिंहगणाः गच्छन्ति
न सूयतां प्रार्थितमानवेन्द्रः ।४५।

महेभजालानि गुरोर्वनेषु
प्रकम्पमेपुः सघनस्थलेऽपि ।
जवात् प्रधावन्ति रुषान्न हेलात्
परस्परं शान्तविधातहेतोः ।४६।

गतिं समासाद्य सदा चलाया
उच्चालयोद्भावगताश्मखण्डम् ।
प्रवातदोलायितवृक्षसंघैः
समापतत्यत्र भयं विधाथि ।४७।

श्रद्धार्तिमात्रेण बहतप्रणाली
जीवस्य भारं सहतेऽल्पयत्नैः ।
यथा खलानां कृतयः परेभ्यो
दुःखप्रदाने सुखिताः भवन्ति ।४८।

स्वरूपवोधा न्नहि शत्रुभाव-
मायाति लोके किमिदं विचित्रम्
मित्रं वने सान्तरिते विभातं
काले मदीयोऽपि तदीयरूपः ।४९।

विकल्पकल्पं कलितं कलेवरं
कलाकरांशोः करतो कृतं किम् ।
समर्थयन्त्वं परिपालयाशु
त्वया विना नास्ति परः परेषाम् ।५०।

रसा रसासारप्रसारिताद्य
तथाति भावैः रहितं मनोऽस्ति ।
स्वरो वरं तद् श्रूयते न कश्चित्
न कान्ति वार्ता शुभकेशवेशा ।५१।

मदेन मत्ताः प्रमदाः वसन्ति
ग्रामेऽधुना ताः विफलाः गताः किम् ।
भागस्य खेला परितो सुलोके
विनाधिकारं सदयं वसामि ।५२।

स्वभावमध्ये मनुजाश्चरन्ति
गतिं सहासं नहि कर्तुमर्हाः ।
अतो महान् लोकगतः परार्थी
चिन्तां स्वकीयां कुरुते न नित्यम् ।५३।

नागेन्द्रलोकोऽपि विसह्यतापं
सेहे मनोभिः समुदारवद्भिः ।
अल्पोहि जीवः किमु कर्तुकामो
लोके सुशक्तिः समतामयीयम् ।५४।

स्वप्नं हि लोके खलुभाग्यभाजां
शोकातुराणामतितोषदातृ ।
चिन्त्यानि चेतांसि यदानुभूत्या
निक्षेपणानि समापयन्ते ।५५।

सुचेतनानां स्खलितं क्रीडायाः
तपोऽपहारस्य परं सुमार्गम् ।
वृद्धावपि न्यूनपदं न धत्ते
विश्वास्यसः शान्तहृदो सुजातः ।५६।

देशैर्नकालैः परिमेयमंहः
नलौकिकं वस्तु जगत्यमूल्यम् ।
यते ! किमर्थं न विराममेति
धृणाप्पदं तद्हृदि निर्गुणत्वम् ।५७।

उद्वेजिताभ्यां सहसांकपालि
स्वप्नोपनाम त्वरितागतं तत् ।
आवर्जिताश्रु प्रणिपतशिक्षं
सर्वस्य साध्यं समयेषु सिद्धम् ।५८।

निगमतगतिभङ्गिर्देवलोकैर्विशोकैः
द्विजवरमनुयातैः शंकरैः सार्थवाहैः ।
अनुपदमधिरोहं देहदाहं विधाय
विलसितसुसहायैः किं न लब्धं सुजातैः ।५८।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये जीवनपथन्नामा चतुर्दशः सर्गः समाप्तः ।

# ॥ पञ्चदशः सर्गः ॥

वनस्पतिर्ददाति सर्वदौषधिं नगस्थितः
प्रतानिनी महीरुहे करोति केलिकाननम् ।
मधुच्युता वनंगता बिभर्ति पुष्पसंहिता
फलन्ति कर्म संचितानि दिष्टमाश्रितंनहि ।१।

ववर्ष सर्वकामदं जलं महीतले हरिः
पयोधराभृतस्तनुर्गवांगणः प्रयाति हि ।
स्तनंधयः कृतानतिः स्वमातरं विभाव्यते
हृदिस्थिता प्रहेलिका मुखेन भाषिता सदा ।२।

समागमन् सुखिन्नमानसोऽध्वराश्रितश्चिरं
विवेकनेत्रकर्षितः सुदर्शनं समायितः ।
समाहितैः फलैः सहाप्यते गृही प्रियां प्रवि
परस्परं प्रदानकर्म कांक्षते प्रियो जनः ।३।

सभाः मनोभवाः कवीकृताः पुरिस्थिते जने
मनः सुसन्तिभावनाः विचारमार्गणोद्भवा ।
विमानमाप्तमेकदैव सर्वमानसामिलत्
विप्रशोकतन्तुवान् विवेश दुःखसागरम् ।४।

उदागमद् विसृज्य गेहभारभारितोऽपि सन्
उदारसारतोषितो निरीक्ष्य दीनपीडितम् ।
पदातिदुःखकर्षितः कुतोऽगमत् प्रयोजनं
प्रशासकस्य सद्मतो विशंसितुं समर्थयत् ।५।

तनुः सवेपथुर्नयावहेलनेन संगता
विचार्य कार्यपारणाय वक्तुमुन्मुखोऽभवत् ।
पराभवो विरोधितस्य जायते विकारणं
दुरोदरेण बाधते विचित्रतत्त्वशासनम् ।६।

दिधीर्षया नियंत्रितस्य मोहकारि शालिनः
सुखांगिनो निसर्गकार्यकारिणः जगत्सु तत् ।
विनिश्चितं सुतर्ककारिणो नयेन पारितं
सनातनायते मनोरमं वचो विवेकिनः ।७।

व्रजांगना विरज्जति स्तनावगुष्ठिता शनैः
पुनः पुनः त्रपावशा महाजनस्य दर्शनैः ।
जलस्य पात्रमेकतो धृतागता प्रमेव सा
इतीह सस्मितां विलोक्य रज्जितस्त्रपावशः ।८,

परस्य मर्मभेदिनो वसन्ति सर्वतोदिशि
समानितैः सुराजप्रागशासितैरमात्यजैः ।
जनस्य सौसभेव राजते पथो नृपावनौ
जनैः समागमेन मदिरं दलैर्दलैः सह ।९।

प्रसारितं नभोऽन्तकारि सौधशीर्षभागजं
प्रभञ्जनोपरिस्थितं विभाति दूरदर्शनात् ।
पिनाकपाणिना सुधाधरो धरागतः कृते
प्रभाकरेण कर्षितस्त्रिशंकुवद् विलोक्यते ।१०।

पराजिताः विरोधयन्त्यवालिकाः विभागते
शुचिस्मिता सितासितागता यदा नुयामिनी ।
प्रभातवातमत्तमोदितास्थिता तदा प्रिया
विभूषणेन भातितो [illegible] ।११।

मृदंगवाद्यवायुना प्रसारितं स्वरं ततः
निशम्य पञ्चचामरस्य देहवान्विनिर्न्दितम् ।
घनस्य गर्जितेन चातकाः यथा भवन्ति तत्
गताः परं पदं गतश्चिरार्जितं तपः फलम् ।१२।

विभक्तबिम्बमागतं रवेः करं समुच्छितं
च्युतो दिवो विभाति तत्र सर्वतः सुशोभितः ।
अरालहीनमंदिरः सुधासुधौतभासितः
चकार विश्मयान्वितः स्फुलिंगहितो यथा ।१३।

प्रपापुरीं समाश्रितः सुपण्यविथिकां तदा
सुवर्णभारनिर्मितं सुतोरणेन सज्जितम् ।
लवंगगन्धवासितं द्रुमामयाश्रितं स्थलं
सभागृह विलोक्य मोदमाप दुःखंहारिणम् ।१४।

निराकरिष्णुरागतं स्वकर्मजं विचार्यं यः
शरण्यमायते वचो निशम्य तस्य रक्षितुम् ।
निरर्थक परेशजन्मगर्हितस्य संस्मृतौ
सुधांशुवत् प्रकाश्यते समाधिमद्हरिः सदा ।१५।

भजन्ति भावसंकुलाः ब्रजन्ति ते हरेः पदं
दयार्द्रितं मनो न कि सुखाहितं समाप्यते ।
मनोजपारमायतिः करोति किञ्चिदाहितं
सुनीतिभेद आयते बिसंशयः करार्जित ।१६।

मदायते जनैः सदा सुखागमेन नित्यशः
प्रपञ्चतुल्यभावनां करोति गेहराजितः ।
सुधीरभावभावित सुसगतं यशस्करं
कृताञ्जलिः प्रणम्यतत्र भाषितः सुभाषितम् ।१७।

स्त्रियस्तदा जरागताः विलोक्यभावनायिता
कथं सकम्पमायतो गृहाद् बहिर्बिराजते ।
अयं जराऽन्वितो जनो धनस्य लाभदायके
यदोः पुरे समागतः सखेदमीक्षणे रतः ।१८।

कृपालु चेतनाविगामिना सुकामुनाऽमुना
मनः स्वभावगात्मेत्य सर्वसर्गमुच्यते ।
इयं स्वयं विदाहमेत्य सुस्थिरासमुज्ज्वला
धनेशराज्यमास्थितोऽपि तोषमायते नहि ।१९।

महेन्द्रगेहगाहिताः जनाः सुविश्मयान्विताः
भवन्ति यत्र तत्र दीनसेवकस्य वार्तया ।
किमस्ति किं समीक्षते कुतः समागता तनुः
किमीहते वचो ददातु सेवकाय सत्वरम् ।२०।

विनाशमार्गगाहितो विलोभभारभारितः
अयं कृपां गुरोर्विगाह्य तत्त्वभेदबोधकः ।
सतीर्थभावमेकतो विना न सिद्धिरायते
रहस्यदेवतानये निवेदनं करोम्यहम् ।२१।

च्युतसौख्यमाहित वेशकारिमहाभयंकर पापिनः
कथमेत्य सोदरमोहनः प्रकटीकृतः सरहस्य ।
अथसो मुनिः परिणामरम्यसुखंवचः प्रतिपाद्युचे
लघुबन्धुदूषणभेदनः भवतीह देववरांकिता ।२२।

कतमौ विनिर्गतछन्दसः ससरोरुहाकृतिभाजनं
सकल कलात्मककारितं वहुरंगभावनसुन्दरैः ।
सत्सहेलया समतास्थितं समयश्यदायनमार्गतः
मनसीऽस्यगम्यरुप विलोक्य प्रसन्नतानन्दर्शने ।२३।

अभिमानभूरिपरायणोलघुगीतिका सुहृदः परः
समतामतिस्तनुता स्थितिर्विदुषामतो स्वजनायते ।
चरितेन तामसरोगिणं प्रतिमानहानिमनायते
प्रकरोति भक्तजनस्य रागमनेकशोधरितः स्थिरः ।२४।

वहुलानुरागनिवासहासमहामहोत्सवशोभने
करवाणि किं हरिमेत्य लोकप्रकाशबासमहेश्वरः ।
इति चिन्तयन् वहिरायने ससुवर्णछालितमोहके
स्थिरभाजनं धनदानदेयप्रपूरितो जनतावरः ।२५।

उपदेशकं प्राणिधायमिन्त्रवरं परं सुखमानतः
रमया कलेवरमाहृतः पथतोऽल्पवेगसभाजितम् ।
जनतो विकल्पपराभवो मनसो गुरोः स्वकुलावृतः
अनुचिन्तयन् नयनाभिरामविलोकितः परमाकुलः ।२६।

सभुजान्तरं स्वजनं विधायविरामयन् गृहमानितम्
उपवेशयन् रममाणतल्पपरं श्रिया जलप्रार्थिनम् ।
धवनं सुपाद्य पदौ सुकण्टकमाप्लुतौ रजसाप्लुतौ
हृदयस्य वाष्पबहिर्गतो लुलितं प्रिया परधामया ।२७।

अनुभूय सर्वसुखं बहिर्गतवैरूपः क्षमतार्थितः
स बभूव तुष्टसुखी तनुः पुलकाञ्चलं वहितं सुखी ।
प्रथमाभिलाषं इवाधरः स्फुटितोरुचिः परदेशिनः
मनसाऽपिकर्त्तुमशक्यतां भवतीह शोकमयेस्थले ।२८।

निवसन् बहुनिदिनानितत्र सुमान्यमित्रसभास्थले
एकदा बचो बभजे जनैन गते परे दरमाकुलः ।
अभिमानवित्तभरेण देव जनार्द्रितेन परायितः
ननुविस्त एवासित शुकदो कचनं प्रवेद धनाशिनः ।२९।

परितोषपोषणमानितं सततं महाजनवाञ्छितं
नहि किञ्चिदत्र विभावितं परमं महत्त्ववलं चलम् ।
सुजना जगत्सु विराजिताः सुलभेवरात् परमाश्रितः
गृहमास्थिता अपिदेवता बहुलायते सदने शुभे ।३०।

या लोके जननी मतानवकला सर्वैः सदा वन्दिता
वीणा सुन्दरवादिनी निखिलदा मालाधृता शोभिता ।
भ्रातस्तां जगतो वरां सुजनतां पूज्यां प्रणामं कुरु
सर्वेयत् कृपया पठन्तिसकलाः विद्याः सुखैः सुस्थिराः ।३१।

आशक्तौ समयानुकूलकरणं बुद्ध्याबलैः शक्तिभिः
सर्वेषां नियमो गतिन मनसा केनापि दूरीकृता ।
शिक्षां लोकजने ददाति समये कालः करोनीदृशं
अस्तं गच्छति शान्तभावमनसा चन्द्रः प्रवालप्रभः ।३२।

आचार्याः मनसा प्रयान्ति कुशलैरात्मेंगिता ज्ञानदाः ।
ख्याताये विभवैर्दिगन्तयशसः सेवासमारम्भणैः
सम्माने प्रथिताः जनाः सुसबलास्ते संगता : लोकतः
प्रातः प्रांगणनो गतः सपुषमश्चन्द्रप्रवालप्रभः ।३३।

अन्वर्थं कृतिरद्भुता महीलयं यत्रास्ति लोकस्यतत्
येनास्ते भुवि भक्तलोकनिवहः सानन्दभावैः रहः ।
यं धृत्वा भवसागरं सुतरते कं तं न श्रद्धां दधौ
तत्वं तिष्ठति मानसे सुविमले गोप्यं न तद्वर्तते ।३४।

तन्त्राणां परिपालनं सुकुरुते यः सर्वभद्रात्मकः
देवाः सर्वसमर्थकारणमयाः नित्यं रमन्ते मुदा ।
शक्तौ लब्धगुणाः प्रवीणकवयः कुर्वन्ति काव्यं नवं
वाण्यास्तद्गुणवर्णने पटुतमा वीणाऽपि मौनं गता ।३५।

कर्त्तव्यः यशसां सुभाजनमयो नैतोऽस्त्रकर्मागतः
नाम्ने यः शुभभानवोधरति तं देहं जनैर्निन्दितम् ।
दुःखं सर्वजनातिरिक्तवहनं कर्त्तुं समर्थः सदा
लेख्यं नास्ति निरर्थकं सुमनसो दारिद्र्यदीर्णवपुः ।३६।

पौष्कल्यं सुविभाति किं परिजनैः सर्वात्मना सेवते
जीवानां सुफलं च किं सदयतः संचीयते मानिभिः ।
केषाञ्चिद् दुरितात्मनां च गणितं दोषाय यद्भावतः
किं ग्राह्यं परिहार्यवस्तु निखिलं विद्या चरित्रं वपुः ।३७।

संभारेण महाजनोऽपि महता किं नाम नाप्तं यशः
संज्ञायै कविमानसे नहि पदं कोशानुकारे रहः ।
लोक धारय कर्मतः सुमनसः सर्वस्य मानं कुरु
तेनैवात्र फलं भविष्यति सदामिष्टं विचारेस्थितम् ।३८।

किर्मीरं कुसुमं सुमानजनितत्यक्तं सुरागैर्मुदा
हेमन्तेऽपि पतत्रिणां विपुलता शोभाकरी राजते ।
संमानेन महोत्सवं विदधतो देवस्य किं वर्ण्यते
हेतुं तस्य कदा प्रजाः सुमनसा ज्ञात करिष्यन्तितम् ।३९।

भक्तेर्भावपरो महाजनमना निर्वाहदेहे स्थितः
सर्वां कार्यसुचारुतां परिचितां सपादयन् सुस्थिराम् ।
अन्ते लोकमनांसि जेतुमनिशं कञ्चिन्नलाभं लभे
तस्यास्तित्वमहो सदा वसति तत् सेवापरोजायताम् ।४०।

सत्यान्वेषणतत्परैर्विधिकरैः सर्वं सुलभ्यं कृतं
चेतो ज्ञानविवर्धनं सुगमता जायेत यदेवान्तिमम् ।
तेभ्योऽध्येय सुजातिमद्भवति किं जन्मान्तर संफलं
प्राप्तुं तां पदतां महा[illegible] संदेहदेशं गतम् ।४१।

नेदीयां नियतिं तनोति विपुलां नो किञ्चिदत्याहितं
सेवाभावविलीनतां जगति तैः स्वेच्छाबलैर्नीयते ।
मोहं स्वैरविहारकं परिहरन् पुण्याश्रयं सेवते
किंकिं नो कुरुते भवाब्धितरणे लोके सचिन्तं मनः ।४२।

सिद्धः सर्वजनातिगो मधुमयोभावः सदा राजते
तस्याद्यो धृतिमान् परार्थमनसा संधारणे सक्षमः ।
गीतिर्यस्य यशोमयी हृदिगता सर्वैः समाजे प्रथां
नीतः सोहरते मनांसि सुसतां येनास्ति शान्तिः शुभा ।४३।

निष्कर्षः सुकरः पयोधिसुतरो विक्रान्तशास्त्रे पटुः
अत्यर्थं तपते सभाजनमनो निःक्षिप्तवात्सल्यकम् ।
न्यायासैश्चिनुते निमेषसहसा व्याधूतवीणारवः
वर्धिष्णुः मृगया शकुन्तरसिते वीभत्सरुक्षाक्षरैः ।४४।

वंशस्यास्ति कथापि किं नियमनात् किं जायते शास्वतं
सर्वैर्लोकमहेश्वरैर्मरणजं दुःखं सदा प्राप्यते ।
तर्हित्वं तु दधासि किं सरलते ! भार न तेषां कृते
ये लोके सततं परार्थघटका धन्ये धरित्रि ! स्वतः ।४५।

वेदान्तस्य सुरक्षणाय सततं कार्यं करोतीव यः
ब्रह्मस्थानविलीनसज्जनगणैः सेवांविधातुं रहः ।
आचार्यस्थितिपालनाय बहुशः पीठं कृतं येन वै
संसारे मरुदेशमध्यपतिते रेवातटे पाविते ।४६।

प्रच्छालन्ति मलीमसं नववधूः वस्त्रगृहाभ्यन्तरे
येनान्तः करणं सुखायतितरं भावार्द्रितं संसदः ।
चण्डांशौ प्रविशारिता विरलितं वस्त्रं वलाकाभ्रमं
चेते स्थापयति स्थलंकिमथवा सर्वत्रगंगाजलम् ।४७।

उदकजनितशोभां चारु चारित्र्यभासि
अभिशरणविलासाशाविघाते प्रभाते ।
अमृतमथनदेवं द्वारिदेश प्रणम्य
तरलतमविरोधं देवदेवं नमाम ।४८।

उपकृतिनववाक्यं स्वापमानादलक्ष्यं
मुनिजनमखिलं रोपं प्रदुष्टं विधाय ।
अति सबलपिपासाव्याकुलस्तत्र मार्गे
रसितजन इवाह्लादं विनोवाच वाचः ।४६।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये द्वारिकापुरी वर्णननामा पञ्चदशः सर्गः समाप्तः ।

# ॥ षोडशः सर्गः ॥

सरलजीवने सुसंगते
मधुरिमायतेऽनुदुःखितम् ।
सुतमसावृता विभा हरे–
र्ज्वलति पाविता चिरं दिने ।१।

धवलधामकधराधृतं
परदयार्दितं सभास्पदम् ।
सुपरिवर्तते सदा विधि–
रुदयपर्वते यथा रविः ।२।

रहितरत्नशोभिताः सदः
रुचिरवंशभूतसद्वराः ।
रहसि सेवकाः सुलक्ष्मणाः
अनुचरेण पालिताः श्रुताः ।३।

अपरिणामवाञ्छितं वसु
न सदने मनोरमं भुवः ।
निभृतवान् हि दैन्यभावितो
विरसभाजनो हि पूज्यते ।४।

अनुचरोऽपि धर्मपालितः
चलति दुःखमानकेन हि ।
सुजनभाजनं स्वजीवने
जयति कीर्तिमंशुमत्तनोः ।५।

वृजिनकारणं निबन्धनं
भरति वैभवो जलं यथा ।
हरति कान्तमत्तनुं यतः
शरणमाहुराजंवार्जनम् ।६।

अविदितं ममत्वमायते
तपनतेजसा जने सदा ।
अटविवासमाकरं सुखं
सुतपसा यशोऽभिवर्धते ।७।

अनवसानबद्ध यशस्कर
सुरभितं भयानकं मतम् ।
मरणकालमाविलोकितं
सविधुरे विधौ कुतः सुखम् ।८।

नियमिता मनुष्यसंगतिः
प्रचलिता महाजनांगणे ।
भरति मानसे न पुण्यभाग्
जगति तस्य हानिरेति हि ।९।

भ्रमकरी विभावसंततिः
प्रमुदिताः महाजनाः हृदि ।
कथमनार्यसेवयावनौ
सुखखनिः समायते शुभा ।१०।

चयधमा हृदः प्रशंसिता
भृकुटिवक्रताक्षिबोधिका ।
ललितभावनाभिमर्दिता
विकचपुष्पमालिकालिका ।११।

परिजनैर्विदेशवासितै
सफलता सर्मजिता प्रिया ।
विरह दुःखदाग्निंना विना
दहति भावना न पीडिता ।१२।

यतति किं बद स्वयं प्रिये !
प्रसिदत प्रशान्तिमाप्नुहि ।
निजकृतिः शुभायते सदा
रुचिरता भवेन्मनोरमा ।१३।

उत्तमदेहो निम्नगतः किं
वित्तधनं नादैः रहितो यः
पीडितलोकः गेहजनस्य
शं परमं कुत्रार्थ्यंवलाय ।१४।

भौतिकता देवैः परमार्थ्या
मानससिद्धेः कारणभूता ।
लोकजनस्याधारगतेयं
पूर्वंपराभूतौ परितोषः ।१५।

गेहरतास्ते सौख्यसरागाः
वित्तजमाहुः खर्बंमदुःखम् ।
स्वर्गंमयं स्थानं यमदत्तं
दुःखदमार्गं यच्छति सौख्यम् ।१६।

निर्जरसः सर्वे धनलुब्धाः
शून्यवचालो रुक्मवती च ।
कृपंणरक्ष्यो नाकनमेरुः
को नहि [illegible] धारयतीह ।१७।

सज्जनता संमानपदे या
भोगविरागैर्दूरविलोला ।
मोहवशाः मूर्खाः भवशोके
दुःखनिमग्नाः जीवनभाराः ।१८।

चेतसि संस्कारः समतायाः
निष्फलतां याति स्वगतं भो ।
रागभरो देवः समुपेत्य
कारयते कार्यं भवबन्धम् ।१९।

धैर्यंभवो भावोऽयमनादिः
दूरतरं क्रान्तः समयः किम् ।
देशविहारे लीनजनानां
किं श्रुतिगानं रञ्जयतीह ।२०।

निश्चयमात्रं नो फलदातृ
मानसपापं देहगतं नो ।
कष्टमतीत्याधारगतो यः
स्वप्नविरामं सावसरं नु ।२१।

दुर्ग्रहता पीडागतिदात्री
गण्डरिकापादाविकजम्भः ।
दिव्यविकासो भव्यनराणां
सर्वमनीशं किं कृतिशक्तिः ।२२।

नोपगतः शान्तिर्भवतान्तो
कर्मविधौ लीनोऽखिललोकः ।
मोहभरोऽयं दीर्घसमाजो
खेलयते सर्वान् मानवकुलम् ।२३।

स्निग्धहृदो दोषोनहि भारः
तीक्ष्णजनो मार्गे पतमानः ।
धारयते कालं ममतायाः
सर्वं विरामस्तापविकारी ।२४।

विश्रमभाजो मन्दनियोगैः
साधयते स्नेहः परिवारे ।
सौख्यभराः मुक्तामणिकेव
देशविभागस्तेन सुरक्ष्यः ।२५।

वेदितुं गगनमापशकलितं
लीलयाविहगपेन सुरपतितः ।
चेतसा गणयितुं जनमनसः
भावुकोऽपरशुभं सुचिरयते ।२६।

यौवने सुमलास्वधरपुटं
दुर्लभं विमलते परिजनता ।
इन्द्रियाणि सुखदायिविरुपणे
दुर्जयानि दशया द्विजवरतः ।२७।

रुपवन्तमधिकं किमसरसे !
वाञ्छसीतरगतं प्रमदवने ।
निष्फला तव सुयत्नततिरतिः
जायते न सिकतामयसमता ।२८।

अप्रियाणि परिणमपरिगते
सुस्थिराणि मनुते सुनयधनः ।
देवता क्वचिदपारविरहिते
लभ्यते नहि विधानविगलिते ।२९।

नायिकाननुमतं प्रियविरहं
चन्द्रिकाविकसितं कुमुदगणम् ।
शान्तभावमभितो भ्रमरकुलं
दर्शनं भवति न प्रचुरतमः ।३०।

कामिना सुमनसः प्रणयिजने
दुर्लभं स्फुटतरं मुखकमलम् ।
ज्ञायते चटुलतरेण प्रमुदितं
तेन मानमभितस्त्यजतितराम् ।३१।

धातुरेव नियमोऽस्ति सचपलः
मानवस्तु विफलैः छुरितपरम ।
बिम्बिता नु कलुषे तनुतरले
कल्पना सुजनता चरणतले ।३२।

सेवकैरनुमता मुखरसुधा
देववर्गभवतीतरसदना ।
स्वाभिमाननिधिना तिरयति सा
कर्मकारणगता सुमधुरजा ।३३।

सेवते न मनसा विबुधगणः
शामयन् स्वजनिताखिलवदनम् ।
तत्र मन्युपरिधानपरवशः
जीर्यते जगति सः जनसदसि ।३४।

सुस्वरो द्रुततरं युवकजने
लोचनेन मधुरं वितरयति ।
देहजैः सुरमणैः मदिरवशा
दाहिकैव वरदा मधुल[illegible] ।३५।

गौरवेण महता कुमुदवनं
राजते व्यथयतः सुरतरोः ।
पश्यति स्वनमयं स्वजनहितं
कालदाहविगतः स्फटिकमणौ ।३६।

कस्य नास्ति हृदयं युवतिजने
सालसं प्रणयजं चतुरुषा ।
रुपता हि बलताऽबलमनसि
प्राप्यतु स्तवनमध्यविलसितम् ।३७।

चिन्तनं विकुरुते पुरुषबल–
मीहते नहि तथापि तरुणभरः ।
त्यागकागिसुमनः समयपरः
लोकतः विगतमोहपरवशः ।३८।

लीलया परिजनैः समुपहृतः
कंपते नु पवने पथिकयुवा ।
कोऽपि नो ददति भावुकलपनं
तस्य जीवनवहा भव समदे ।३९।

चेतसा तदितरं बहिरथवा
स्वीकरोति न जनो द्विपदशनम् ।
केवलं सुजनता परिगदितं
धन्यवादमिह काम्यत्रितरितम् ।४०।

चन्द्रवत्मंधनशालिभिरभितः
कीर्णमालवजधासमदबहुः ।
तन्महोत्सवकुलेन दिवसतः
शंसयत परमतो सुमनभरम् ।४१।

यांति यो नगगणेऽभिसहजत:
किं जडो नहि गुणाग्रहणपटु: ।
स्नेहदानमधिकं विटपगण:
सेवया समुदपादि सफलम् ।४२।

सर्वत: सवनकर्मणि जनता
नागरी विनयभाववशगता ।
सांध्यकालमनुगां परविर्ति
ध्यायते निगदकृष्णचरितजाम् ।४३।

ऐक्यमच्चलयश: सुवनितया
कर्मतत्परभवानुकूलतनु ।
दुर्लभं सुमधुरैनिजपतिना
प्राप्यतेऽद्वयमना बृषभजुषा ।४४।

सेबका: परिणमन्ति सुकृतिजान्
स्वीयतन्त्रमनुगं सहजनता ।
दासहेतुरधिकं हृदयगतं
बाधते न तनयाभिलषितिमा ।४५।

स्वागतं सलिलपानसचितं
गायनं ससुरवाद्यवेणुकम् ।
नर्तनं हृदयभावनि:सृतं
नन्दितं स्वरविरामवन्दितम् ।४६।

साधनेन सविधौ प्रयोजनं
नास्ति मानमहितस्य भूपते. ।
तेन सर्वजनता कदर्थितं
भूषणं नहि सहातुमादिशम् ।४७।

लभ्यते प्रयतमानजनेन सा
कीर्तिरन्यसुलभा न लौकिकी ।
सत्यसंगरमतौ विराजते
शक्तिमान् श्रितपरोपकारणः ।४८।

मोदते हृदयभावनाश्रितो
रागतोऽपकृतितां विहाय यः ।
साम्यसन्निधिमुदासते नहि
तस्य जीवनवनं सुपुष्पितम् ।४९।

बैधतां बिकुरुते बलान्वितः
स्वार्थतत्परमनाः सुरागतः ।
तं न कश्चिदनुदारधीवरो
मान्यतेऽपि मनसा बहिर्मुखः ।५०।

सिद्ध्यति स्वगतभावनो सदा
योऽश्रमे निवसते न शास्वतम् ।
संयमो मनुजगः परानिधिः
तेन सर्वमभिगम्यते स्वतः ।५१।

एकतो वलपरायणो जनः
शक्तिसौरभविगर्हितोऽपरः ।
तर्जने निरतमानसोऽधृतो
जायते किमु न संशयास्पदम् ।५२।

नेत्रकोणसमवस्थितं लघु
प्रेम मानवगणेषु दूषणम् ।
निह्नुते नबलता न ताम्यति
यो वयः समतयाऽभिकांक्षते ।५३।

माननीयजनभावनां वशां
स्वीकरोति समयागते गतिम् ।
लौहसारसमतांगतो जनो
जायते सहृदयः सुकाव्यतः ।५४।

हेतुमान् भवति साधनेन यः
तं जनाः नगरस्थानतः पराम् ।
अर्चनां विदधते विधानतो
नैमिषागमविचारतत्पराः ।५५।

भावनां भरति मानसेऽवरां
दुर्जनः जगति सारमानतः ।
तेषु मित्रगणनां विकल्पनम्
दुःखदानभरणे नु जीवनम् ।५६।

यौतक सदयभावनावशं
तिष्ठति स्मृतिकलाकलायितम्
यस्य सार्थकपरा कृतिर्ध्रुवा
सो मनुष्यगणनासु मनितः ।५७।

आदिमानवसुखं न वाञ्छितं
सेव्यभाववरदानरूपितम् ।
दानवोऽपि वशतांगतोऽधुना
कर्मकारणरतः परास्तवः ।५८।

साम्यभावभरितोऽपि मानवो
देवता परिभवाय योग्यताम् ।
अर्जयन् निखिललोकसिद्धिदो
जायते मधुरतावरोऽपि हि ।५९।

संसदीय हृदयं परस्परं
व्याकुलं मिलनभाव इंगितम् ।
विश्वती विवशतापरायणो
गच्छति स्मृतिपरः सुमानवः ।६०।

सांध्यकालमनुगच्छतोऽपरं
मानवस्य चरितं निरीक्षितुम् ।
काव्यकारणतयानुगामिनी
जृम्भतेऽभिनवबुद्धिवैभवा ।६१।

सर्वदेवमयमानवोऽभवत्
नाकलोकमधिकं नु वैभवे ।
लभ्यते न खलु संशयोऽधुना
ज्ञानवान् हृदयेन सिञ्चितः ।६२।

पीडितः प्रतिभया समाकुलः
भावनाभिरनुरञ्जितो अचरः ।
द्वैतभावमपि भेदवञ्चितः
द्वैवपारकरणेऽपि सक्षमः ।६३।

पामरोऽपि कृपयानुकूलतो
प्राप्यते वरदबुद्धिवैभवे ।
तेन सानुगमनोरथोद्धतः
जायतात् द्दयति सा सरस्वती ।६४।

नियंतार्थसमयानुपालने
यो जनं न कुरुते यथा मतिः ।
सस्य जीवनधनं विसर्यतो
ज्ञायते भुवनचिंतयाञ्चितम् ।६५।

अंकितं तिष्टिलरेखयाशुभं
नो कदाचिदतिरिच्यतेऽसताम् ।
लौकिकी पतितभावना सदा
भाविनी विकृतिकारिणीतिकिम् ।६६।

निष्कलंकशशिकान्ति शोभिता
भूरियं कुसुमसंततेर्विभाम् ।
नेष्यतीति करुणात्मना शुभां
कण्टकानि मृदुलां प्रयास्यति ।६७।

दक्षिणे कमलवासिते विधो-
रंशुकं मृदुलतां परितो ददौ ।
आशयैव जगतो गतिः स्थिरा
संततेर्हृदयभाववशाश्रया ।६८।

तिथि वलविजितेशाः दाहमन्तः सभायां
त्रिभुवनललनान् मंत्रिन् वचासि स्वकीयान् ।
अवितथधनमाहात्म्यं प्रशान्तिं विधातुम्
श्रुतवचनप्रमाणान् ज्ञानभासा प्रपेदे ।६९।

कलकलकलहंसे राजदेशे नृपस्य
विरहित जनपक्षं स्वकीयं विनापि ।
कलकलकलितं वाक्यं निशम्यातिशायी ।
प्रकटित शतभावं धन्यवादं जगाद ।७०।

विकचकमलधाम्नि स्वादयुक्तानपाये
चरणनखमयूखं कृष्णनाम्ना विधाय ।
उपरचितसभायां गेहतर्षं प्रभावं
विकलगुणवितानं स्थापयामासतत्र ।७१।

बुधविमलविवादं देवजन्मं सुवाक्यं
अतिथिचरणदासं शीलदानातिनम्रम् ।
सकलविकलभासि स्थानयोग्यं समीक्ष्य
गृहगमनसुखं संगन्तुमाद्यं जगाद ।७२।

अनघकुसुममान्या: ताः सभाः सादरं तं
द्विजगणपरिपूज्यं गन्तुमाज्ञा दिदेश ।
प्रबलमनुभवं लब्ध्वां मितं प्रहर्षे
प्रचलनपथि मग्नः प्रगादेन सद्यः ।७३।

इशीन्द्रविरचिते सुदामचरित–महाकाव्ये राजनीति-संवादनामा षोडशः सर्गः समाप्तः।

# ॥ सप्तदश: (२२९) सर्गः ॥

श्रमिता मयासि मानैर्वेलायां यामिनीविगतहासैः ।
स्वगतं विहरामि धृती प्रदूरितो दग्धहृदये नु ।१।
भावैः प्रवाहितेयं नदीस्तृषायाः महीयसी याता ।
तामुत्तरितुं यत्नो जातो विविधदिवसे रात्रौ ।२।
सस्नेहं भावनासु नियतागमने स्वभावजां देवीम् ।
प्राप्तुं मनो मदीयंमार्यां यतते समाजजनिः ।३।
विधिगतयथार्थंतेयं शान्तिविधाने विभाति दक्षा ।
मर्मस्थलेषु पाकं परिशीलयितुं समायाति ४।
आलिंगति मदनोऽयशरदि यत्नतत्परो भवति ।
तनुते भयंकरं तापं सर्वसमर्थंजनमनसि ।५।
नावति क परमार्थः मानसभावसमुयगतः साधोः ।
भजने लीनो लोको धरणीं धारयितुमेतिनु कः ।६।
सरसा सरस्वती सा भार्येवाधिवरणीयतां जाता ।
धन्याः ये प्रमुदन्ति यानं कृत्वा विभावनया ।७।
सेवायै संसारे जनतायाः जीवनं भवेत् यावत् ।
तल्लब्ध्वा सुजनोऽयं किञ्चित् कर्त्तुं न योग्योऽग्रे ।८।
उत्सुकतायाः रेखा भूयः सचितैहभावनासारा ।
मध्ये स्थितिः प्रपञ्चे हृदोः कथं सममिलनक तत् ।९।
श्रावणहासे लीनाः सततं भावुकतया नियतनेषु ।
कुर्वन्ति वशे भावाः स्वकीयकार्यंपरिणामेन ।१०।
दिव्यास्त्र किमु नाप्यं लौकिकबन्धनसमाजदास्यं तत् ।
मधुरानन्दनसारे कुर्वंत् संयमनकामेन ।११।
संघट्टने धरायाः सर्वं शक्त्याः समुत्सुकाः नीत्या ।
कुर्बन्ति किं त्वदीयं मधुसंमानं सुन्दरमते ! सुमात् ।१२।

शुष्कं विहाय पुष्पं दूरतरं मे गतं मनः सम्यक् ।
लब्धं भवेत् कथं तदन्त रतं यत्र संघर्षः ।१३।

तारांकितं नभस्तन्न न शोभनाय सब्रलाभिशालिगतम्
भूमौ कथं ससीमं वस्तु तवार्थं न तोषाय ।१४।

हेमावलम्बनं किं रुचिकरतां प्रकटयतितस्य नित्यम् ।
सीमान् ते गणयति मानसभाववगा वृत्तिः ।१५।

रुदनं करोति मानवस्त्वरितं विरही सुखाशतां याचे ।
मरणं निहितं तस्य कथयतु मुर्खो न जानीते ।१६।

पवनगतिभिः सख्यानं समागमनधूलिपटलविभ्रमः ।
दृष्ट्वा जीवति सुषमा स्मरति न किं वद मनोऽतंगः ।१७।

मनसोऽवरोधनं यद् दूरीकर्त्तुं ममुत्सुके सद्यः ।
अध्ययनस्य शरण्यं गन्तव्यं यत्नतो धर्म्यम् ।१८।

या भावना गताद्या जनेषु योग्यों विमर्जनार्थं कः ।
उत्पादितो जनन्या पूजार्हः सः पुमान् सार्थं ।१९।

विद्यते मयि न मानव विरोधिनी
विवेकमयी भावना हृदिस्थिता ।
तथापि तुदितोऽह समाजिकैः
पतंगवद् दीपावलिं गच्छामि सदा ।२०।

ज्ञातः कथन्ता खलु भाग्यकोशः
अहं तु शोचामि विधातरं तम् ।
लब्ध्वा यमेवं कृतवान्न किञ्चिल्
अध्ययनं लिखति ...

सन्तः समावर्तनलालसायां
धनस्य लिप्सां गणते सुतुच्छाम् ।
मयापि सेवा व्रतमद्य लब्धं
तनैव लोके निखिलं सुकर्म ।२२।

धान्य न विद्या न सुखाश्रयगेहं
मनो मदीयं न मनाकृतदानीम् ।
गतर्णसौख्यार्त भवन्ति मातुः
पुत्राः समाश्रित्य मुनेररण्यम् ।२३।

मातर्न पुत्रो गमनेच्छुरस्ति
मातुः पृथग्भावमनिन्दितात्मः ।
सामाजिको जीवगणो यशस्वी
हृदन्तभावं बहिरातनोति ।२४।

चर्येः सुदामाऽधिकतानुभूतेः
निरुक्तकालैः स्वगुणं वितेने ।
धैर्यं सतां सद्गुणमर्थितं सत्
तथावलम्ब्यारममाणञ्च भेजे ।२५।

शरीरहीनोऽपि शरीरधारी
विलासहेतौ मदनौ वनेऽस्मिन् ।
प्रियासुहागेन सुरोमयुक्त
शिवं समाराध्य समागतौऽभ्ति ।२६।

सद्यः समेत्यात्र महाप्रमोदैः
सुखं स्वपामीतरथा विचारे ।
जीवं विहायैव बिक्ष्यलक्ष्यं
लब्ध्वा महन्मार्गमनुव्रजामि ।२७।

उत्तीर्तु दिव्यातनुरापनीया
विनाग्नितापं न सुवर्णपात्रम् ।
प्रक्षिणवीर्यः समयोन्ममूख:
कश्चित् सुकालोऽत्रप्रतापहेतु: ।२८।

प्रतीतगाथा कथिता मया किं
गुरुकुलाधिष्ठितमानसेन ।
जानिष्यते यद् हि मया प्रयत्नैः
फलं भविष्यत् सुखपूर्वकं किम् ।२९।

हृद्भावना श्रीरखिलोत्तमास्ति
यया जनो भाति महत्त्वशाली ।
स्वीकृत्य तां य सुखवंचितः सन्
प्रतीयतां भाति नयो जनाय ।३०।

संज्ञा समाजस्य कृता मनुष्यैः
स्वबन्धहेतावथवा स्वहेतौ ।
तथापि लोके कथने विभाति
मिथ्या विचारो मनुजाय किंवा ।३१।

कथं जना दीप्तसुखस्य पात्रं
दुःख समाश्रित्य यजन्ति देहम् ।
भाग्यं नुकस्यास्ति सुदर्शनाय
कुरु प्रयत्नानि सुखाय सर्वतः ।३२।

स्वतापिका मे मनसः प्रमाद्य
जातामहो किं परमं विचित्रम् ।
श्रेयः सतांसंनिहितं मतौ तत्
तत्स्थितायाहमपीष्टहेतु: ।३३।

संकोचशीले ! न कदात्वयाहं
किञ्चिद्हृदा प्रीतिमवापितोऽस्मि ।
तदा न तत् सत्पथितागतेऽस्मिन्
केनोत्तरे मार्गणि पातनीयः ।३४।

सधन्यवादैर्मिलनं वृणोमि
यदा त्वमत्रासि समागता माम् ।
परन्तु भाग्यस्य विघातहेतौ
न कार्यमन्यद् भवितुं हि योग्यम् ।३५।

न तेप्रिये ! किञ्चिदभीप्सितं सत्
प्रपूरितं दुःखततिर्हि तस्मात् ।
असंभवेऽपि तव वाञ्छितार्थे
मयावहेला मनसा न कार्या ।३६।

अनुष्ठितं किञ्चिदनिष्टकल्पं
त्वया समक्षं सहनीयमच्छे ।
वियोगयोगोस्ति वलीयहेतुः
सौख्यंफलं प्राप्तुमहं यतिष्ये ।३७।

येनास्मि लोकेऽनुगतार्थवाञ्च
तत्ज्ञानमप्यर्थगतं न प्रेक्षे ।
त्याज्यो विधिर्नास्ति कृतेऽनुतापे
तथापि यत्नं प्रकरोमि सद्यः ।३८।

अर्थाय लोके निखिलं विधेयं
मया कथं तत् समुपेक्षणीयम् ।
विद्या.मपि सर्वसहाऽकुतोभया
तस्याः प्रभावेण सुलभ्यमन्यत् ।३९।

नराः समागत्य गृहात् सभायां
कृत्वा सुदाम्ने बहुशः सुपूजाम् ।
स्तवं सुगीतं सहितं सुरागं
प्रसन्नमुद्राय गृहागताय ।४०।

रसः परं सः हृदयानुभावः
यः सच्चिदानन्दमयो विभाति ।
मायाविवर्तैर्विविधोऽभिगम्यः
शान्तस्वभावाय नमोनमस्ते ।४१।

सिंहासनाधिष्ठितराजराजे
करेण लोकाधिपतेः प्रियायाः ।
आदर्शतालिङ्गनतत्परेण
पादौ नतौ यस्य हृदा नमस्ते ।४२।

कुवासनेयं प्रमदा मताऽस्ति
विहाय तां त्वं बहुमाननीयः ।
लोके च शास्त्रे कथितं जनौघैः
लोकाय दुःखाय न किञ्चिदन्यम् ।४३।

सुमित्रवद् यस्य गुणानुबंधि
लोकापवादेऽपि च तोषकारी ।
न लालिते त्वं ललनाललामे
विश्वासपात्रं भव सत्त्वनिष्ठे ।४४।

उत्साहसम्पन्नजनो वरेण्यः
सर्वेषु कार्येषु मतोऽस्ति नान्यः ।
ग्लानिं विहायैव फलस्य भागी
लोके सुजातो विमतिर्न कापि ।४५।

इच्छाविधेरेवबलीयसीति
महोमनः सिद्धगणाग्रगण्यः ।
स्वयं समागत्य पवित्रतायाः
चिह्नानि सम्यक् प्रथित नि येन ।४६।

गृहीतदामा सुधिया भवेऽत्र
पारं गतः स्वात्मगतैरुपायैः ।
हे देवते ! त्वां स्तुतिमाचरेऽहं
सदा सदर्थं श्वसनं करोमि ।४७।

गतायुषो नामविवर्जिताः ये
सन्तः समाधौ कृततत्त्वसाराः ।
हितोपदेशे नवकान्तिभाजो
मनोजवेगस्य गतिर्न यत्र ।४८।

सरस्वतीयं सुतरां दयालु-
र्नरोत्तमे सर्वगुणं विधत्ते ।
तेनाधिकं सः शुशुभे सभायां
देवायने पूज्यमहोक्षवत्सः ।४९।

सर्वं रहस्यं प्रतिभाति लोके
स्वात्मैव सत्यं जगतः प्रतिष्ठम् ।
लभ्यं तदेकं विनिवार्य सर्वं
मनुष्यधर्मो निहितस्तदस्मिन् ।५०।

सदाभिलाषो हृदये धृतोऽस्ति
सर्वार्थमर्थं समुपार्जयेऽहम् ।
किमस्ति सत्यं प्रतिभानवत्त-
द्वन्वेषणं यस्य कृतं मनोज्ञं ।५१।

जहाति मानं समयानुसारः
कोजागरे पुष्करतीर्थसार्थः ।
परिष्ठितिं ये परिवर्तमानाः
पृथक् चरन्तः पृथिवीभुजानः ।५२।

संसारसौख्याय परस्परं ये
व्यक्तेः सुपूजां चरितुं सयत्नाः ।
तेषामकीर्तिर्भवतीह नित्यं
संदेहलेशोऽपिन कश्चिदत्र ।५३।

संबन्धिताशाहि मनुष्यतायाः
संहारकर्त्री मनुते कवीन्द्रैः ।
अकामतोक्लिष्टतरोऽक्षयगः
धन्योऽस्ति लोके मनुजोत्तमः सः ।५४।

चिन्ताचरित्रश्चरते न सम्यक्
यतो विचित्राः मनुजस्वभावाः ।
सुखाय दुःखाय च लोकतंत्रे
मनः स्वकीयं कथितं जनौघैः ।५५।

विद्यानवद्या नवतानुपुष्टा
ददाति सर्वं मनुजोत्तमेभ्यः ।
तस्याः जनाः सानुशयाः भजन्ते
कृपां सुगुप्तां विनयार्जितां हि ।५६।

धन्यः सदा नीतिपथानुगामी
विधीयते येन परार्थकार्यम् ।
संभावनीयं महिमान्वितं त–
दसंशयं सः समुपैति भाग्यम् ।५७।

विधौजनः पावनताधिकारी
सेवाश्रयीतस्य गुणानुवर्ती ।
तेनैव तत्रं स्वगते समानं
विभाति सद्यः जनतागणेषु ।५८।

व्रीडाधनास्ताः ललनाः भवन्ति
हास्येन विश्वं परिवर्तमानाः ।
तासां समाजे प्रवृत्तोऽभिगन्तुं
जनः सधन्योविविधावतारैः ।५९।

संगीतके तानलयानुगामी
जन्मापि धन्यं भविताऽस्मदीयम् ।
संचारणेऽहं वहुमाननीयं
समस्तसाफल्यमवाप्यतोपम् ।६०।

हस्तस्थितां भाग्यगतिं विहाय
सुदूरचिन्ताचरणे विलग्ना ।
जनः सदैयात्र सुखानुकूलं
स्वजीवनं दुःखमयं विधत्ते ।६१।

एको विपक्षी सुखसंविधान—
मुल्लंध्य निम्नां सरणिं चिनोति ।
तथा समुत्साहितपार्थिवोऽय
प्राणैर्वियुक्तोऽत्ररतां वृणोति ।६२।

उदारतादारसमागमेषु
जनानुरक्तस्तनुते प्रकामम् ।
उल्लासंपारावतसम्पुटेऽस्मिन्
विभाति कामानुचरत्वकोटः ।६३।

दुःखानि दूरीकरणे समर्था
लोकेऽस्ति काचित् सुमतिर्जनानाम् ।
आलस्यहानेन महोपकारैः
प्रशंसनीयश्चरते मनुष्यः ।६४।

भूमिर्मदीया प्रियवत्सलेयं
ददातु धान्यं भरणाय पूरम् ।
न दुर्लभं किञ्चिदपीहलोके
मित्राणि सर्वाणि सुखाय सन्तु ।६५।

श्रमेण विद्याः ममताद्रचित्तैः
सम्बन्धिलोकान् वसुधा सुनीत्या ।
प्रजा पुरस्कारकृतः सुराजा
सदा यशस्वी भवति स्थिरो यः ।६६।

सत्कारयोग्याः धनिनो भवन्ति
सोदारभाजो जनतापराः ये ।
विद्वान् सुरक्ष्यः सततं प्रयत्नैः
धनेन देहेन मनः प्रदाय ।६७।

सुरक्षितेयं वनसंपदात्र
दुष्कालमप्यस्ति विवर्तनाय ।
संरक्षिका या भयकम्पितानां
भाग्यस्य दानं कुरुतेऽधिकं सा ।६८।

क्षान्तेर्मतास्त्राणि करे विधाय
प्रेम्णारिवर्गं विनिवार्य सद्यः ।
शान्तेर्न भंगो नृपतिः सहिष्णुः
ज्येष्ठं मतं मेऽस्त्वमतं समत्र ।६९।

विक्रान्तितो शान्तिजनिर्वरेण्या
विभाव्यते जातु नये पुराणे ।
जिगीयते लोकमहेश्वरं यो
दुर्भावनां चेतुमलं प्रयातु ।७०।

अपस्मृतिर्देवगणाद्बिभेति
सद्विप्रवर्गैरिव धर्मलीनात् ।
समीक्षते त्वद् हृदयानुकम्पैः
कर्त्तुं यथा नो सुखभावनेयम् ।७१।

कलावतंसेन जनेन नित्यं
सहस्रसंख्यं गुणमर्जित्तं तत् ।
शकास्पदं तच्चरितं प्रवृत्ते.
पथिस्थितानां न विचारिणीम् ।७२।

तृप्तिर्यदायाति सुधास्वरेण
मनुष्यतेयं महती विभाति ।
विश्वासवार्ता विफलानमन्या
विचित्रता सर्वगता विजाता ।७३।

संभावना मानसमेति सद्यः
सा प्रेरिता मन्त्रमहौषधीभिः ।
कृतज्ञतां ते चरितुं समर्थः
बरेणधाता धवलायते नो ।७४।

लोभेन सिक्ताः स्वजनानुरक्ताः
जनाः निरर्थाः भ्रमणाय यान्ति ।
रुप्यस्य काले रुपतां विहाय
मनुष्यता तुल्यगता विरौति ।७५।

प्रज्ञाधिदेवी यदि तिष्ठतीयं
पवित्रिते ते हृदि धन्यलोकः ।
तस्याः बलेनातिशयो विभाति
संस्कारयुक्तो रमतेऽथिलोकम् ।७६।

सखे! विलोक्याद्य भवत्प्रयाणं
जलैः स्वनेत्रे मिलिते सुजाते ।
किं नागमिष्यन्ति कलाः सुलोके
यद् दृष्टिदोषाः सुलभाः भवेयुः ।७७।

चक्षुर्ममेयं तुदते निरीहं
कथं न दृष्टं स्वफलानुबिम्बम् ।
खेदो द्वितीयः समुपस्थितोऽंशी
बयं स्वमायावशतांगताः स्म ।७८।

श्लाधार्थमास्ते नरदेहकर्मं
न किञ्चिदत्येति परोपकारात् ।
परेतदेवा अपि मृत्युलोके
कांक्षन्ति स्वर्गे स्थितिर्गर्हणीया ।७९।

शीलस्य संरक्षणमामनन्ति
सन्तोऽपि लोके बहुमानयोग्यम् ।
अकाण्डसर्वस्वप्रदानसाक्षी
त्वं मित्र ! सद्यो मयि सानुरक्तः ।८०।

महाजनानामनुकम्पयात्र
सर्वं सुपाद्यं गणयन्तु सम्यक् ।
नेता हितायास्तु जनेषुनित्यम्
नैतानिकाः सूर्यपदं लभन्ते ।८१।

वीरः सदादेशसुरक्षणाय
विभेतिनो वाणपरम्परासु ।
श्रद्धास्वरुपेण सुदेवतास्ताः
धर्मेण धीराः श्रियमाश्रयन्ते ।८२।

परोपकारेण परत्र लाभं
शूक्ष्मेक्षिकाभिर्नवमार्गशोधम् ।
स्वविक्रमेणान्तगतौ शमादि
सुखं स्वकार्येण विनाग्रहेण ।८३।

ततोऽलं नास्ति मार्गं यस्य सदास्मिन् लोके
कर्त्तव्यमवशिष्टं सिद्धिर्भवति प्रयोगेण ।
जीवितुमपिकार्यं किमतिरिक्तं किञ्चित्तिष्ठतिक्षणम्
अतो हे मानवानामन्नपालित संततं संयतत्वम् ।८४।

पुष्टिर्गता मित्रता गुरोः सन्निधानमेत्य
नयोऽपि परिवर्तते जनाश्रितः ततः द्वारकागतः ।
सर्वदाहितं समीहते नह्यि कदापि दोषदृष्टिः परः
तथापि नास्ति संभवो ददेत किञ्चिद्धनम् ।८५।

कश्चिन्नहि भवान्तरेऽसहायकोऽधनानां कृते
अभिशापतो महाजनो धनेन विरहायितः ।
गृहं गमिष्यमाणीऽहं संगतो भविष्यामि
सधर्मिणीं ब्राह्मणीं दीनानामपि मनोरथाम् ।८६।

एतदेव लोकानां नयः प्रचारितो दिशि
तुष्टं वराकेन सुवस्तुनाकिमस्ति लोके ।
साधिकैर्गुणैर्बहुदिनं समाप्य जीवनं

एवभाकुलो बनानिलैः सुखांशमापयन्
नहि नहि यतितव्यमिति चलन् ग्रामटिकां प्रापितः ।
अत्र स्वरसंहतैः धूमायितां पुरींविलोक्य
आश्चर्यभावनायितः सुखिन्नमानसोऽभवत् ।८८।

याः प्रियेऽन्यजन्मनि त्वया साकं
समागमं भविष्यति निश्चयं मम ।
विवेकशालिनी मतिर्न चञ्चला
जायतेऽस्मद् विधस्य दुःखकालेऽपि ।८९।

अहो ! विधे ! त्वयासदा दुःखायितः कथम्
किमस्ति पापसंहृतं पूर्वजन्मार्जितम् ।
येनभोगमापयामि संचितं धनम्
कः सज्जनो वेशवशगनोऽस्तिजीवने ।९०।

आयुः बहुदिनाय दुःखरुपितोऽस्ति मे
कथं गमिष्यति विनावलम्बसहायकम् ।
अतः परं लघनमाशायास्त्रुटितं सदा
हरेः सकीर्तनेबुभूक्षयाकुलोभवाम्यहम् ।९१।

अतएव जनानां कृते सन्ति न विधायकाः
अवहेलनया साकं न मह्यं काचिदिच्छा ।
यदधीतमहो तथा कुरु तेनाशुभं विहन्यते
हितैरपि समाजमानितैर्जनैः ।९२।

कल्पनां कवितायाः समाश्रिताः वयं गृहे
स्वदेशसंगमानीय दुःखाहितम् ।
जीवनेसुखस्य नाशकं प्राप्य
[illegible] सा: ।९३।

कुत्रमेप्रिया सती गतवती
कुत्र कुटिरं मे सदागतं महोत्सवम् ।
कुत्र पाठकाः सन्ति सुपात्र तांगता
जनस्तुदग्धः स्वयमत्र नद्धोऽश्रद्धया नतः ।९४।

जीवनस्य सार्थकता विद्यते कस्मिन् वर्त्मनि
विचारकाः विश्वासतर्कसहायको विस्मार्यन्ते ।
कथंस्यात् सत्यसंभवो ज्ञानगर्भनिर्भरे
मूढता च प्रौढता स्वपाशमर्थयेतेसदा ।९५।

नैतिकस्य वन्धनं समादरणीयं मया
महाजनस्य दर्शनं सदा सत्पथायते ।
सहायकं विस्तार्यंते फल सुपन्नतामये
दुःखस्य मार्गणि यशः कर्त्तव्यजं मूलोकजम् ।९६।

जगतिरमणीयवस्त्वापाततो नास्ति संशयं
मोहावलम्बिताः जनाः परितो भ्रमन्ति हि ।
कोऽस्ति विचारलोकभावनायितः सात्विक
तत्त्वमहोगोपनीयभ्रमं क्रमं विचारणे ।९७।

वीक्षणे चतुर्दिशि सुखानुभूतिरायते संवंधिता
विना संबंधवन्धनं न दृष्टिपथंमपि जायते ।
तेन क्षेत्रमायतं कुरु भवे नैकान्तिकं सदा
अहेतुना महाजनो बन्धुतामयं प्रतान्यते ।९८।

उपनिषदि विचारं धारयन् धारहीनः
स्वकुटिरगृहनारीं प्रापितः संभ्रमेण ।
धनवलसमभावौ सौम्यमूर्त्ती गृहे तौ
अधिहृरियशसस्वर्गं परार्थमिलानो ।९९।

समम नसि विचारं कुर्वतस्तस्य मार्गे
विजनगतिविभावैः सोऽद्यपाठं सुप्राप्तः ।
दिवसमणिगते सः सेवकैर्नीयमानः
भवनमवनसाप्तेः यत्नकोटिः सरागः ।१००।

इतीन्द्रविरचिते सुदामचरित–महाकाव्ये गृहगमननामा सप्तदशः सर्गः समाप्तः ।

# ॥ अष्टादशः सर्गः ॥

गता विहायाद्य मनोदुनोति
कर्त्तव्यतावातविवाह्यमानम् ।
संकेतितं कार्यमिदं त्वया नो
कस्मादनाथा विहिता वयं नु ।१।

नवीनवेशैः परिवर्त्य भावान्
स्वकीयमानं द्रवितं विधाय ।
विपर्ययेण विधिनाधुनाहं
गतामवस्थां न विचिन्तयामि ।२।

सदा त्वयाहं परिचिन्तितोऽस्मि
कथं विपद्यद्य धृतिं धरामि ।
तमस्विनीय भयमातनोति
हा हा स्वाबालैः सहसागतेयम् ।३।

उपायमालम्ब्य कमागितकोऽयं
ससारदुमागरमुत्तरेच्च ।
त्वदीयकीर्तेः परिरक्षणेऽत्र
बाधा न काचिद् हृदयं दुनोतु ।४।

प्रिया कथाका स्मृतियोग्यतायां
सदा विधेया प्रथमान्तिमा च ।
इत्यादिचिन्तागलितोऽधुनाऽहं
शरण्यतान्वेषणतत्परार्थः ।५।

त्वच्चिन्तितं योगपथं प्रणेतृ
समानधर्मेण पुरः प्रयाति ।
स्वयं समारब्धधृतिप्रयोगः
पन्थानमादेशपरः करे मे ।६।

ममत्वगर्तात् कथमाविलात् त्वं
निःश्रेयसाप्ति प्रतिदत्तचिन्ता ।
न मेऽस्ति निःसारणमार्गसेतुः
बुद्धौ स्थितोऽहं विपदांगतोऽस्मि ।७।

मूर्तिः सुसत्या समयोऽयमास्ते
तस्मात्त्वमाचारमयी प्रसन्ना ।
मायावृतेऽहं भवने वसन्तं
जनं समाचारसुखं भजामि ।८।

कदा सुकालोऽयमुपासनायां
दृष्टौ समायाति महामुनीनाम् ।
लोकेऽभिरामाय सुदुर्लभोऽयं
तं प्राप्तुकामा परितो भ्रमामि ।९।

सर्वे जनाः दैन्यवशाः रुदन्तः
भवन्तमेवाश्रयतां वदन्ति
सत्वं मदीयं भवितुं सचेष्टः
तथापि नाहं गणितुं समर्थः ।१०।

सेवासमीक्षा भवतोऽस्ति दीक्षा
तामाप्य कार्ये प्रवृत्तिर्ममेयम् ।
साफल्यहेतोः परिवर्धनेन
कृतार्थयाद्य ममतामदेऽपि ।११।

देवांशभूतेषु दया शरण्या
समानधर्मैः सह वर्तनानि ।
नीचैः सतृष्णं कृतिकर्मभेदैः
कालो गतो स्थानशुभं लभेनाम् ।१२।

हिंस्रा सहस्राः परितो भ्रमन्ति
माया सुदायेव हृदो विकारा ।
गतिर्न काप्यन्पथे सतां सा
स्फोटं व्यनक्तीति प्रतीतिहेतुः ।१३।

सभ्याभिधानं दुःखदानदक्षं
तमेव सर्वे ससुखं लभन्ते ।
ग्राह्यो न मह्यं किमु जीवनान्ते
त्वमेव पन्था कुदिनाय सभ्यः ।१४।

सम्माननीयेषु जनेषु देव !
त्वमग्रगण्यो विदुषां गणेषु ।
प्रभावमाकल्य मदीयमन्त्रै-
श्चरित्रमग्न्यः प्रथितोऽस्मि किं वा ।१५।

मित्रं न केनापि हृदानुसारं
लब्धं त्रिलोके महती विपत्तिः ।
दुःखाय चिन्ताऽस्ति सुखस्य नित्यं
हतो बुधाग्रः स्वरुचाभिसिक्तः ।१६।

रक्तं मनः सान्ततमे प्रदेशे
विकारहेतौ तु कथा सदन्या ।
बुद्धिर्मदीया भ्रमते निशायां
श्रमाय चिन्तागलिताऽतिजाता ।१७।

इच्छावशे मानवजातिरग्रा
तथापि किञ्चित्करणे न शक्ता ।
स्वभावमाक्रम्य गतिं करोति
हृच्छूलमात्रं प्रथितं पृथिव्याम् ।१८।

लब्धं पदं यन्न हृदानुमन्यं
सुखं समारब्धकृतौ सुजातम् ।
मनो विरामं लभते तथापि
कथं न शंका समुपस्थितेयम् ।१९।

किं वाञ्छनीयं मनसो न जाने
परस्य चर्चा विहिता जनेषु ।
भाग्यं तदूर्ध्वं विलसायमान—
मज्ञानधारा विरलायते मे ।२०।

जनो ममायं ममतामयेऽस्मिन्
कालः सदा गच्छति मामकीनः ।
अवस्थयाऽहं विवशायमानः
सचेतसो सावरजो भवामि ।२१।

सानन्दप्रीतिर्भुवने ससारा
तां को न वाञ्छाशरणां करोति ।
अहं कदा तां हृदयेन सद्यः
आलिङ्गने बद्धकरां करोमि ।२२।

मनोविनोदाय समस्तकार्यं
लोके महान्तः समुपाचरन्ति ।
कथं मया नो पृथगावभासि
सेवा समाजे क्रियते सयत्नम् ।२३।

सुवर्णकान्तेः परिचायको यः
समादरे सः प्रथमः प्रयाति ।
भावी अभावं क्षितिजाः सुसाध्याः
व्रजन्ति किं लोकसशोकमग्ने ।२४।

अर्ध्यं प्रगीतं भवते न योग्यं
किं विह्वलोऽहं वितरामि सद्यः ।
ज्योतिस्त्वदीयं तमसाऽस्ति छिन्नं
चित्तं विचित्तं समुपस्थितं मे ।२५।

उत्थानकार्येण समाप्ततोषाः
गतं गतास्ते मुहुराकरेभ्यः ।
हिमालये तुंगपदेऽभिसिक्ताः
गतागतिः कान्त करोति साध्यान् ।२६।

तथैव सर्वं सुखदं विभाति
सा त्वं मदीया भवितुं सशक्ता ।
विडम्बनेयं हृदयं भनक्ति
स्मृतावहं जीवरसं पिबामि ।२७।

सुखस्य पात्राणि समस्तलोकाः
दुःखाय मे जन्मदिनं बभूव ।
प्रयोजनाद् भ्रष्टजनोऽयमास्ते
कारुण्यमुक्त्यै मम कर्मजातम् ।२८।

सौख्यं त्वदीयं हृदयाभिलाषः
मज्जीवने सर्वविधौ विभातः ।
स एव जातोऽतिविषादकारी
द्यक्तस्त्वया मर्षितभावनाभिः ।२९।

कस्यास्ति वेला जगतो विभूति-
र्ज्ञाता कथं मानवधिषणाभिः ।
यस्यां न जाने कतमः सुराज्ञो
भस्मीकृतो विस्मृतितां प्रयाति ।३०।

दृष्टागतिः सौख्यभरालसायाः
दुःखानुभूतौ तु गतिर्न वन्द्या ।
लोकस्य शोकाय समस्तकार्यं
व्यापारितं किं विधियोजनायाम् ।३१।

धैर्यं धनं मेऽस्तु परार्थहेतो-
स्तेनैव मे जीवनरंजनं स्यात् ।
लोके समायान्ति सदा महान्तः
संपाद्य कार्याणि बहिर्भवन्ति ।३२।

संघर्षणेनातिविकासमाप्य
जनाः मुदायात्र भवन्ति योग्याः ।
कथं भयं ते हृदि जायतेऽस्मिन्
संघर्षवृद्धौ जगतः सुमत्यम् ।३३।

तरङ्गघातास्तटसंनिकर्षे
स्वभावलोलां प्रकृतिं व्यनक्ति ।
तटस्तु तान् हस्तमयेन पक्षा-
नालिङ्ग्य शान्तिं चिरमाप्तुकामा ।३४।

दया तु कस्यापि समस्तजन्तौ
प्रवाहरूपेण विराजमाना ।
लब्धुंसकामा महतां प्रयत्नैः
अन्तःसमावेश्य सुखी प्रयातु ।३५।

जन्मान्तरीयं कृतकर्मभोगं
संप्राप्य लोकाः मलिनाः भवन्ति ।
कृतस्य भोगं परिहर्तुकामा
सत्कार्यशीलो भवितुं यतस्व ।३६।

अन्वेषणं मेलनभावनायाः
स्नेहातिरेकैर्निहितं जनेषु ।
ईर्ष्याकलंकेन विधूतपुण्याः
प्राप्तुं समर्थाः नहि मर्त्यलोके ।३७।

प्रेम्णः परित्यागरयेण सत्यं
क्षणं विनष्टं भवतीश्वरीयम् ।
लोभस्य लाभः परिवाधकोऽत्र
संसारकल्याणपरम्परासु ।३८।

सर्वोच्चकार्यं सहसा सुकीर्ति
तनोति संघर्षमये समाजे ।
लक्ष्यं समीपं परिवर्त्य गीते–
रायाति सद्यः समुपाश्रयाय ।३९।

सत्यं न जाने परमाभिमानैः
स्वत्वस्य माने हृदयं विलीनम् ।
मनुष्यगाने प्रतिभाविलासं
देहावसानेऽपि विकासयामि ।४०।

लक्ष्यं सुशान्तिर्मनुजस्य नित्यं
मंदा मनुष्यैः सुलभा सुनित्या ।
कथं भवान् तत्परितो विहाय
सुखाय यत्नं कुरुते सधर्मी ।४१।

नाशाधिके ! त्वां स्मरते मनो मे
संसारतायां वरदानरूपे ।
विकासनीयं हृदयं मदीयं
मर्मच्छिदा मानवता प्रदायि ।४२।

कर्णायिते ते नयने मनांसि
केषां न शेषाणि करोति सुभ्रे! ।
मदीयकेन्द्रं च्छुरिताब्धिमध्या-
देकान्तितः सावसदं विभाति ।४३।

पीतं सुपर्णं पतदभ्रभक्त्या
वार्तां जनस्यातनुतेऽधिलोकम् ।
दृष्ट्वा विरौतीह वनाधिवासी
सेवाव्रतं यस्य परं सुकार्यम् ।४४।

सांसारिके जालबद्धाश्रितोऽयं
जनः समेषां विमुखो विमानी ।
गतिं समासादयते क्व जाने
समर्चनं यत्र बुधाग्रणीनाम् ।४५।

सदर विभवतारता समा
कतिपरिवारजनं सुखायते ।
स्मितसरसविलासभारिणी
शुभरमणीयफला कलामला ।४६।

स्फुटमधुरवचोभिरांगणे
युवतिजनोऽपरवक्त्रतांगतः ।
समयसदनमागतं परं
विविधजनं प्रमुदायते बहु ।४७।

किसलयंपटछादितं जलं
मधुरभरं पिबति प्रमोदतः ।
कनककलसभाजनाज्जनः
कमलकराभिमतंसभाजितम् ।४८।

कुमुदितमिलदाननं मुहुः
तरलतरं समलंकृतंपरम् ।
गृहगतयुवनेत्रभोगिनः
सदयविलोकनचातुरी त्वरम् ।४६।

पथिकजनभरे पथि स्थिरे
दमनपरं मिथुनं चकास्ति तत् ।
नगरजनितशोभयारहः
स्वसुखमवाप्य विरामवत् सदा ।५०।

मदनपरवशा मदायते
शुभकमनीयकरानता मुहुः ।
पतिचरणरताऽधुना मनः
विषयगतं विमलायते चिरम् ।५१।

निपतितफलसंग्रहो मुनिः
वनवसतां स्वगतं शुभायते ।
हृदयहरणभावनारतो
गतकलुषो वसुतां समर्जयत् ।५२।

शुभमनसि न याति विस्मृति –
वंद क्रिमकारणताधिदैवतम् ।
सततसुखमनिच्छया सतां
जगति समागमने विमानितम् ।५३।

सदलकुसुमवर्गकामिनी
मदनशरैर्निहताय कामिने ।
कतिपयमनपायसारणं
भवति समर्थविभावधारिणी ।५४।

अनुदितशशिनाधरा वरा
विकलमना परितोऽवलोक्यते ।
भुवनभवनवासनिष्ठुराः
विकलहृदः कथने विभाविताः ।५५।

विदितपरिचयाद्य संसृतौ
निपुणधिया कुरुते मतिं गतिम् ।
निमिलितनयनोऽपिदर्शने
पटुतरतां नयतेऽधिकं मतम् ।५६।

कुटजकुसुमदामनिर्मितम्
सदयसुदामपरायणानता ।
विरचितबहुचित्रकोटिकं
श्रुतमिव परिधाय संश्रयम् ।५७।

त्रिभुवनदलभोगभासिता
नवनवमौनधरा सुहासिनी ।
निमिषमनुपलभ्य सादरं
वहति सभाजिततोषविरागजम् ५८।

लवणरसविधानभासुरं
निखिलजनैर्मनसा प्रशंसितम् ।
सकलविधसुभोजनाञ्चितं
प्रियसहयोगभरेणखादति ।५९।

अभिमतसुखभावैः कालमाधारभाद्
विषयगतिमुपायैर्दूरमावेशयन् सः ।
अखिलगुरु विमानं योग्यतायै विधाय
स्वसमतनयमाह्वायाशिषं राज्यमेधे ।६०।

इतीन्द्रविरचिते सुदामचरित–महाकाव्ये पुनर्मिलननामा अष्टादशः सर्गः समाप्तः ।

# ॥ उनविंसतिः सर्गः ॥

समेत्य तां परमगतौपरायिते
जराशमनसंनिधायकः ।
वनं मनोऽविषयमधिष्ठितं सतः
गृहं विधौ सुसततमावशंगतः ।१।

विभावरी दिवसकरस्य वासरः
समागतशुभभवने जरायिते ।
नियामकः सयुवकभे च सूच्यते
विहारिणी हृदयगता प्रभाविता ।२।

प्रतीय तां यदुपुरतोऽतिमात्रिकां
स्वदेशजामवक्ररयुतभूमिकाम्
प्रगन्तुमादेशसहमात्मभार्ययाऽ,—
धुना वनं परमहंसमयो गतः ।३।

चरन्ति ते भुवनगतः समादरं
सुखेऽपि ये न परिहरन्ति मंत्रितम् ।
प्रभाविताः फलसमताभिरार्जवे
अपूर्वतो जनः सुखसेवया कला ।४।

वियुक्तभावमदभरा मदालसा
निवृत्तिमन् नियमभरं न लभ्यते ।
त्वया समं समयपरा विलासिनी
कदापि मानपरवशा न जायते ।५।

भदायिता तरलकथाभिरागमे
निवेदनं प्रणयभरं करोति या ।
नमस्कृतौ सततपरायणान्तता
समाश्रिता परिचयदानतत्परा ।६।

प्रपञ्चरागशरणंगतो जनः
विलोक्यते बहुरुचिराश्रयोऽपरा ।
मुहुर्जराशमनकृतौ विराजितः
उपायतो विततसुखं विजायते ।७।

निरर्थको हृदयसमागमोऽपरैः
विदाह्कि मदनबिताण्डवं नवम् ।
कथं प्रणौमि कथय जीविताबधौ
प्रबोधयाशु कलुषितान्तरं महत् ।८।

कदाचिदायतिसुखदायिनी गतिः
मनुष्यतानुसरणकल्पनाञ्चिता ।
अनिष्टभावभरणविह्वलामला
शुचा विबोधपरमसंज्वराधिका ।६।

अदुर्लभं किमिहि विलोकितं
समानभावलयितमानसेऽधुना ।
विलोचनान्तपरिणयंकरो जनो
विवादसंगमनचरोऽवरः ।१०।

ध्रुवं मनुष्यजननमानिताः वयं
अतीतनामचरणसाकुलास्तथा ।
मनो विवेकसुमनमूच्छिताञ्चला
भवादृशा उपवनवासकषायिता ।११।

क्षिपन्ति तापभरचलायितंजनं
वधं विधाय निगमगायकस्य मे ।
स्थलं परायणचतुरास्तथापरा
विमोहमेति रसनभावनायिता ।१२।

धनिको जनश्च समुपासयते
प्रमिताक्षरैर्ददति तो वचनम् ।
तरलायते तिमिरगो न दृशा
समबिकं सुखमेधते समये ।१३।

इयतीव नामकरणी प्रथिता
प्रकृतौ विनौति दययाधिकया ।
मनसः कथं रचनयालिखिता
समगोपनीयसमुपाश्रयता ।१४।

विषयो बले मुकुलिते बपति
अतएव सश्चतुरतानिलयः ।
घटते महाजवपथे प्रथिते
महतां विचारचरणं सदयम् ।१५।

मुनिसंश्रितोऽपि गृहवासकरः
विदुषः समादृतमनः सुहृदा ।
अवलं सदा परमतोषप्रदो
मलिन मनः न भजतें सुजनम् ।१६।

सुखकल्पलता फलति कामप्रदा
शशिकान्तिलांधि मुकुरेसुशुभा ।
प्रणताय साहसमयं पणनं
परितो विहाय रमते सुखतः ।१७।

अखिले जने सुखलवं तनुते
विदुषां मतिः स्खलनवीचिहृतिः ।
अवधार्यं लोचनपथं भ्रमितुं
विभवस्य लाभप्रसरः सुतरः ।१८।

कलिकालकामप्रभवं सुमनः
क्षणमात्रमेति नहि गन्धमयम् ।
अहितो जनो निजयशः म्थगितुम्
अहितं पराय सततं कुरुते ।१९।

सफल मनः क्षणभरं हरितं
न समीहते विषयशार्यिविषम् ।
निखिलाः जनाः सुवशतां हरिताः
व्यवधौ निराशशरणं न गताः ।२०।

कविलोकतः सकलभावझरी
वहते महाजनगृहे सदया ।
उपदेशवाचि निखिलं भरते
शुभजीवनं भवति तस्य सदा ।२१।

सदयो जनो जितमहीशकलः
हृदयेन मानविबशः परवान् ।
तमरोगगानसमयं भजते
सततं जनः परमभावनया ।२२।

गजबाहनः समुदमेति धृतिं
किमकारणं भुवि सुभारधरः ।
विमनायमानहृदयो मनसा
विधिना वशी सकलभूषयिता ।२३।

तनुभिर्विधेयमनिशं मनुजैः
विधितः प्रदत्तमखिलं क्रियते ।
सरलेन सः सुतरते सुजनः
हृदये करोति भवभूतिभरम् ।२४।

सुतरां मनांसि वशतां कुरुते
न परोऽस्ति लोकसदने महति ।
न समीहया भवति दुःखमयः
तरते जनः सपदि पुण्यवशः ।२५।

करुणात्मना मनसि शान्तिप्रदा
परलोकभावनिवहा सारता ।
समुपायनेन समवाप्तुमहो
कुरु कार्यमेत्य भवलोकतले ।२६।

रिपवो मनोगतबलैर्वशिताः
हृदयान्तरे सकलसाधनदाः ।
सततं भवन्ति मनसा हितदा
इति मानसे धरति यः सुभरः ।२७।

विभवास्पदे स्वभवनेऽभिमता
प्रतनौ सुखे हृदयाभिरतः ।
समजायतातुलयशो महसः
दिवि भोगभारमयते महता ।२८।

समतार्थमेकजनताश्रयणं
जगतो महत् परमधाममयम् ।
परिवर्तनं नियतिहासयुतं
सुमनांसि बोधयति शयनं ।२९।

अखिलाथ कार्यमकरोत् सुजनः
नहि कोऽपि तं निपतनेऽस्त्यपरः ।
अतएव लक्षणयुतां मसृणं
भजते महाजनमनः सततम् ।३०।

सुकविर्गुणै. रसभरं कवते
कलयामलां नवलचित्रकथाम् ।
सुरतिः शुभा प्रकटिता बहुला
सकलाय तस्य कृतयः तरिकाः ।३१।

बहुकंटकोपरचितामलदा
गहनागतिः प्रणयमाधुरिमा ।
समवर्तिता लिखितपुष्कलता
न परं बिभावयितुमस्ति च कः ।३२।

जनसेवया मनुजभावरताः
स्वयमेव लभ्यमुपलभ्य रणे ।
सुखपूर्वकं जगति शान्तिधराः
सुवसन्ति लब्धपरितोपफलाः ।३३।

मनुते पदं दिवसरात्रिगतं
नु महाजनस्य महनीयमतिः ।
प्रतिभादरो निचिताक्षरशः
परलोकजः किमु न पारकरः ।३४।

रमणीयता पवितसारवती
चरणे रता रमणसेवकभा ।
निखिलं सुखं मुखरताधिकृता

उचितो व्ययो हृषितरुक्मवतो
भुवने द्विजस्य सुखमेकतनुम् ।
उपकारकं यतनमानरतं
नियतं लभेत जनताप्रसृतम् ।३६।

हसनास्पद सरलता निखिला
वपते शुभंकरपरार्थमयम् ।
समये सहायकजनो रमते
परितोषदेयशुभदं सुमतम् ।३७।

उररीकृता न बहुशोविषयाः
विजयाय संस्थितिरियं सहते ।
अनया सुनीतिभवया दयया
गमनं महाजिरवतः प्रथितः ।३८।

कुरु शान्तिदं भवनगामिवचः
इह शोकहा भवति ते जननी ।
मनुजः सदा तव यशो विमलं
नगरे गतं रसमयं कुरुते ।३९।

प्रियेऽधुनाहं स्निग्धं स्मरामिभवदाननं तत्
दृष्ट्वा दुःखं त्वदीयं गेहे हृद्वेपतेऽधिकतः ।४०।

निन्दायाः परिपाटी महाजनानां गृहादागतम् ।
किमधिकं चिन्तयसे हे चेत ! समीहयाग्रे चल ।४१।

सुस्वागतं हृदयाभिलषिके त्वदाचरणम् ।
सर्वेषां काच्छितम् विहायत्वामद्यकिं करोमि विश्वान्धमये ।४२।

समीर धीर त्वमागच्छ मयासदैव तस्याः प्रांगणं ।
[illegible] प्रवाहितं भवेत ।४३।

भयं कालस्य कृते पूर्वंशिक्षयते मनुजः प्रबलः ।
नाहं नाहं निर्वाहं करोमि शपथग्रहणस्य ।४४।

स्वजनिशिशुभावैः सर्वबालैः सुखेलैः
पितरि समुपदेशैः पाविता जन्मभूमिः ।
बलिमिव परितस्तां स्वेच्छया त्यागकारी
मनसि सुरुचिभावैर्मार्गमोक्षाय यातः ।४५।

इतीन्द्रविरचिते सुदामचरित-महाकाव्ये भवभोगनामो-
नविंशतिः सर्गः समाप्तः ।

# ॥ विंशति: सर्ग: ॥

त्वदीयं यशोनिर्मलं वाङ्मयेऽस्मिन्
सदा भारतीयैर्निबद्धं चकास्ति ।
महत्त्वं परेषां न जानाति लोकः-
स्तथाप्यर्थतः शंकितं स्वीकरोति ।१।

रहस्तात्त्विकं सार्थकं सन्निवेश्यं
सयत्नैः सतां सान्त्वना जालबद्धैः ।
महाभारतं संस्थितं चारुतातः
कथेयं विभातीह लोके सुसत्या ।२।

दिवा कान्तिमन्तो जनाः स्वागतेन
समेषां सदाचारशिक्षाप्रदाने ।
भवन्तीह लग्ना उदारानुदारैः
रहस्यं मतं काव्यलोकाधिकारे ।३।

जडानां कृतार्थं सहाय्यैः करोति
महांस्तु स्वकार्यैः शिरः सोच्चभावः ।
सुदेशप्रभावैर्विकल्पाधिकालः
न कः क्लान्तिभावे सुखं शान्तिमेधे ४।

चमत्कारहेतुः कदाऽऽयाति सौम्यः
प्रयत्नं पथा केन कर्त्तव्यमाहुः ।
समाजे सुमान्यो जनः कोऽस्ति धन्यः
वितानैर्जनानां सुलाभो न कोऽपि ।५।

कविः काव्यलोके प्रसिद्धिंगतोऽपि
न लब्धिं कदाचित् हृदः संतनोति ।
विरामा गतिः साश्रया सन्निपात्या
न कर्त्तव्यकार्यं प्रहर्तुं सुशक्यम् ।६।

समाचारसौख्यं प्रचर्तुं समीहा
मयि स्थानमेतीति चिन्ताकुलोऽहम् ।
मनीपातिरेकैर्धृतिर्बाधिताऽस्ति
न कर्त्तुं समर्थः सतां सेवनानि ।७।

समुत्साहितैः सेवकैर्देवतायां
पदं प्राप्यते दुर्लभं सर्वधात्र ।
अतो मानसे कांचनीयां प्रतिष्ठां
समुत्पादये भीतिनिर्वाणहेतोः ।८।

गतिं तां विरुध्यास्ति मृत्युश्चिरत्नं
स्वभावे स्थितिः सा न लोकाभिनन्द्या ।
मनो भावनायां विरामं न लब्ध्वा
स्वकीयेन भावेन धैर्यंसमैति ।९।

गतस्त्वं कुतः का न लब्धिः सुजाता
समीहात्वदीया न पूर्तिर्गता किम् ।
मनुष्यो मनुष्यो न देवः कदाचित्
अतः सःहृदः शान्तिमाप्नोति सद्यः ।१०।

मनः ज्ञातुमीहा सदा बाधिका मे
समस्तो विकल्पो वृथा जायतेऽद्य ।
न मार्गः कुतस्त्यो यमाधारमेत्य
फलं प्राप्य लोके न शांतस्य हेतुः ।११।

न जाने कुतो भाव आयाति भूष्णु-
र्यदा मे हृदि स्थितियुक्ता न भाति ।
अतोऽहं न कञ्चिद् विचारं करोमि
भविष्यन् न हस्ते ममाऽयं परार्थः ।१२।

गतं यौवनं मत्तरात्रिर्गतेयम्
विचिन्तोऽस्मि लोके न दुःखावकाशः ।
विलोक्यावनौ चन्द्रभासः सशकं
पुनारोदनं मे तवाश्चर्ययुक्तम् ।१३।

मयाप्ता यदिच्छा सदा सर्वभावैः
फल जीवनस्यास्ति किं न्यूनलोकम् ।
सुबद्धोऽस्मि येनात्र छिन्न सुदाम
सुखस्याधिकोटिं गतो भाग्यशाली ।१४।

रसः काव्यलोके प्रधानं मत यद्
भवे भावुकस्तृप्तिमाप्नोति येन ।
अतो मे प्रयाशस्तमाप्तुं सदायं
चलेज्जीवने मृत्युपर्यन्तगामी ।१५।

जितं येन यावन्मनो भावदोषं
प्रणेता समाजे प्रसिद्धिं गतोऽस्ति ।
विधाता तमेवार्जवं सन्नियोज्य
स्वभक्तिं ददातीह लोके स्वलोके ।१६।

मतं जीवनं मे हृदश्चोत्तमं किं
पथि भ्राजमानस्य किं संविधानम् ।
हठेनान्वितोऽन्वेषणे तत्परो यो
गतिं कां नु लब्ध्वा [illegible] ।१७।

नवीनञ्च नित्यं विधेर्हस्तमध्यं
क्षितौ मानवस्यास्ति सौदर्यतारः ।
यदा कार्यपूर्तिर्भवेद् वैधरुप।
बुधाः मोहमाप्यानुगन्तु यतन्ते ।१८।

जगत् सोपहास हृदोऽशक्तिमाप्य
त्वया योगदानं कृतं मानसेन।
जितः को न जानेऽनुरक्तेन लोके
प्रयासैर्निधानं मनुष्याधिवासे ।१६।

जनः सेवया भावसंदोहमाप्य
स्वय जीवने सन्निधानार्थयोगम् ।
कृतौ सन्निरुध्यास्ति साफल्यकामं
सदिच्छाम्बरात्तस्य तथ्यं प्रयाति ।२०।

शुभं जीवनं मेऽद्य दुःखार्थजातं
कृतं सर्वपुण्यं फलायैव नास्ति ।
कथं कर्मसंपातमाप्त्वा महर्षिः
जनोपूर्वकालाद् विमुक्तिगतोऽयम् ।२१।

न काञ्चित् सुखे संपतिर्लाभदास्ति
न लोके महान्तः सुतुष्टाः भवन्तिः ।
विजानामि सर्वं न तोषाय मह्यं
वितृष्णा ममेका चिरं संगिनी सा ।२२।

सुखं संगतिः संतते पालनेन
नये विद्यमानं न लोके कदाचित् ।
गतं दृष्टिपूतं मनो बाधकंयद्
हृदा केनभावेन संग्राह्यमस्ति ।२३।

रहस्यं विभातं न जातं सुदोषैः
मनो मे सदेदं चलं चारुभावैः ।
न लोकः कदाचिद् ददातीह किञ्चित्
सुकर्मैव सत्यं शुभानां प्रदाता ।२४।

कथेयं चला लोकगा भाति सद्यः
स साधुर्जनानां परार्थं करोति ।
सुभावोऽपि ते मानसं नो धुनोति
धिगस्ति त्वदीयं सुकृत्यं सुलोके ।२५।

मया प्राप्य ऋद्धिं न भोगेषु लिप्तिः
कदाचित् सुनीता सुसंतोषभावैः ।
समायाति मानेन सदानसिद्धौ
महाराजदान्तस्य कीर्ति सुलभ्या ।२६।

प्रमान्ता क्रमो नैव जीवस्य सर्वैः
महत्वं सदा तत् सुलक्ष्यं सुगम्यम् ।
रतिर्भागधेया मतिः शान्तभावा
स्थितिः सज्जने सातिशेते प्रकामम् ।२७।

सुपत्नीमभेदैः समालिंग्य भावै
श्रियं साविलां ता स्वमित्रेणदत्ताम् ।
भुजगप्रयातेन शक्ति सुविद्यां
सपुत्रः सुदामाचिर शान्तिमेधे ।२८।

प्रिये ! तद्दिनं संस्मृतौ याति किं वा
रहस्ये विचारे प्रलीनं प्रमाय ।
इमं प्रश्नहेतुं समेत्यान्तरे हि
समाधानहासमैर्नयन् कालमाप्तम् ।२९।

स्वयंभो उपास्ये समाधिं विधित्स
सुखं गौणमागण्य दीप्तः प्रतापः ।
शनैर्जीवसार्धं स्वकीयेन प्रेम्णा
परस्मै ददानः स्ववेशं पुनाति ।३०।

दिनं याति सर्वस्य दुःखातिरिक्तं
इदं सत्यमस्तीह भाग्यावकाशैः ।
स्वकर्मोपधातैः फलसाध्यमेति
शताशाश्च कार्याभिघाताश्चभान्ति ।३१।

स्थितिः सज्जनानांदिनं दुर्विभाव्यं
समेनैव याति स्वभावेन सर्वः ।
सुधर्मं सुलीलं स्वरुपाधिपासं
ममेयं सुनीतिस्त्वया ग्राह्यरूपा ।३२।

परस्मै जनः स्वार्थमाद्यं विधाय
निसर्गं यशः सर्वगम्य तनोति ।
सतां श्रेयसा पालकार्यं सुरम्यं
दरिद्रातिविघ्नैर्मतं मे नदुष्टम् ।३३।

विकासोऽयमास्ते जनानामुदारः
सुकर्त्तव्यपाशे पिनद्धो विभाति ।
मनुष्याः विकासेन देवत्वमाप्य
मनः शान्तिमाप्तुं पुनः संयतन्ते ।३४।

समूहो जनानां समाजे स्थितोऽयं
स्वकर्त्तव्यजातं करोति सयत्नः ।
समुद्रेन्धनान्नाविकाः रक्षणाय
स्वजीवनसार्धं विधातुं यतन्ते ।३५।

निवेशाभिरामेण सान्वेषणेन
समाजे स्वमानं विनेयं करोति ।
महान् धन्यवादं समर्च्यान्तरोऽपि
सहाय्यं ददातीह लोके जनानाम् ।३६।

विधेराग्रहोऽयं समत्वेन लभ्यः
परीक्षाजनानां सुनीतिर्मताऽस्ति ।
सुखेनास्ति किं लोककल्याणधारा
सतां संगतिर्दुःखभार हरन्ती ।३७।

मुहुः कम्पमानं नु जीवेषु भाव्यं
जयान्तोपलब्धं सुखायैव किञ्चित् ।
पुनश्चानुरूप्यं विधातुं समर्थं
असंभाव्यदेहे क्षमयं न विदध्यात् ।३८।

चलद् द्वेषसंघं सुदूरं विधाय
सुभाषाविवादं परित्यागकारी ।
सुपाठैः सुशोभापमानः प्रसिद्धः
सदा संस्कृतो विश्वविद्यालयोऽयम् । ।३९।

समर्थो जनो लोकगन्तापि धन्यः
कृत यस्य कार्यं हितं भावनासु ।
विधातुं सदा तंशुभं मानसेन
परार्थं नु देही शिवः सानुरुपः ।४०।

न नम्यं न रम्यं महाराजसाध्यं
समायाति मे मानसे मानसोत्सः ।
किमास्तिक्यबुद्धिः सुचिन्ताभृतोयः
समापाद्य रोगाणि हन्तीह सर्वम् ।४१।

भरस्तेऽधुना सर्वदेवातिरिक्ता
मनुष्यो गुणान् गायति स्वानुरूपम् ।
कविर्भावमग्नो हृदः सेचनेन-
गृहे शोभनायात्र सज्जीकरोति ।४२।

निगाह्यं सुबुद्धेर्मतेयं वियुक्तिः
मदीया कृतिः सा निराधारयुक्ता ।
इदं जीवनं मे सुखादेः सुदूरं
गतं बाधकं कालिकं भाति किं वा ।४३।

हृदा साधको ग्राह्यरूपः समाजे
सदस्यैः समानेन साध्योऽनतोऽधः ।
विहायाधुनान्तं क्रियाशीलतायाः
पदं प्राप्तुमर्होऽसि यत्नं विधेहि ।४४।

विजनवनमवाप्तौ वासितौ गत्वरौ द्वौ
परमवनिगतौ सद्भावनादृष्टभावम् ।
महिमनि जनता लीनभावैर्विभाति
तदनभिलषितौ मित्रायमाणौ सुलब्धौ ।४५।

इतीन्द्रविरचिते सुदामचरित–महाकाव्ये गृहत्यागनामा
विंशतिः सर्गः समाप्तः ।

# ।। एकविंशतिः सर्गः ।।

नगरसौख्यभरालसजीवना-
दनुदिनं विरतः सुखमेधते ।
विरहतापसुघर्षितसांत्वनां
ददति भक्तजनाय सदाव्रतैः ।१।

विमलता परितः शुशुभे मतौ
सरसभावमयं वचन सदा ।
सरितमानसतोषकरं जने
व्यथयतेऽमृतसारभरं वरम् ।२।

प्रकृतिसौम्यवशः हृदयस्थितः
सुलभमानससादरभाजने ।
वनमहोत्सवशोभितपादपो
बसति तापपरायितमानसः ।३।

सदनधारणतत्परेण यः
सहचरे मुखरो न कदाचन ।
इयमतीव मनोहरभावना
मनसि पद्मपदं कुरुते हरेः ।४।

मनसिजेन तपश्चरणाय सः
सततातारितमानसनिश्चयः ।
स्वरविरुद्धविरागकरं वचः
शमयते पथिकाननशोककजम् ।५।

भणितिभावसुभावभवो मदः
न मनसः स्थितिमात्तरुषः सदा ।
सुकुरुते नियमास्थितसततः
इदमतीव मुनेः कृपयागतम् ।६।

सुजनकार्यमहोपकृतेः कथा
श्रवणमर्ध्यमुदारमतेः सदा ।
चलति जीवनहारिमहोत्सवे
सुखमयी सरिता बहते नगे ।७।

सुलभभारतदेशगतो जनः
विरमणं कुरुते हरिगायने ।
परमधर्ममयीं जगतः कृति
परिसमाप्य मुदा मरसायते ।८।

सकलतामधिगम्य सुजीवने
हरिमयो पुनरागमवर्जितः ।
भवति धन्यधरा परिपुष्य तं
जयति सः त्रिदिवं समरांगणम ।९।

मधुरगन्धवहेन सुसेवितः
तरुवरैर्ललितैः फलस्वादित· ।
मधुरया मधुसन्निभया गिरा
अलिकुलस्य मुनिर्मुमुहे मुहुः ।१०।

मुकुलिता बहुला ललितालता
नवलपल्लवसंवलिता लता ।
लसितमंज्जुरसालविशालता ।
लवलवं लुलुतेऽलिकुलाशया ।११।

कृशतनुः गृहमागतकालतः
वनसहः प्रियया सह यावतः ।
न तपसश्चयमार्थिकवर्तनं
सपरमादरितः सुसपर्यया ।१२।

नवनवं सुपदं धनसंगमनात्
अभिननाम निवारितसंशयः ।
प्रथुसकारणतेजसि संभृतो
भवति चिन्तनज मरणं पदम् ।१३।

वृषभजां गुणसंपदिशोचतां
गतधनाः शशिनः शुषमा कला ।
शतरुचा परम विमल यशः
अमृतफेननिभं प्रतिभास्यते ।१४।

परमतत्त्वनभोनिमोनिभमानितौ
अतनुरुपविभावपरायितौ ।
विगतकल्पसमाधिमयौ रुचा
जगति भेदकरं भवनं मुचौ ।१५।

मिलनभावमनोगतचारुकं
अनुभवं परितो लियतामिव ।
सपदि माननिराकृतमानसे
नमति योगदवानन्तसागतः ।१६।

धवलिमाभिरताः वनजाः नगाः
शतदलैरधुनापि तथैव हि ।
तदवनौ प्रविशन्ति मदान्विताः
अमरभानुरिवान्तिमदर्शनाः ।१७।

नयनवारिपरागभरः शुभो
मधुरिमा जगतः सदयागतः ।
विमुमुचे तनुतां स्वसमीहया
सुगतिरेव सदा शमयाचिता ।१८।

रुचिरतां सुखदुःखभरेऽखिले
जगति सादरमानयते चले ।
शिवकरी सुदृशा मनसाजिता
जयति तापविनाशभरी सता ।१९।

सरभसा गृहकर्मपराः बहिः
समुपसृत्य ददर्शुरकारणम् ।
नवरसैर्नवसुन्दरतांगताः
सहवसाः गुरुसन्निधिमासृताः ।२०।

लघुतया जितमानवमानसो
मधुरतानुभवे प्रथमं पदम् ।
परमतौ सुतरामधिकारितां
सुकुरुते मनसाविरतं रतम् ।२१।

सहृदयेनिहितः कथतेऽधुना
शुचिमतिः सुधनं मनुजस्य सा ।
जनगतोऽपि सुखं ददतेतरां
कुरुते कार्यमहो निखिलोचितम् ।२२।

दधिधृता सरसा पतिमागता
प्रियतमापि मनोरथसंहतेः ।
सहसखी समपूजयदानता
विधिदलैः सहसा वरदायिनी ।२३।

सभयसिक्तभाजनताधरा
सपतिका जरसा वृततापसी ।
श्रयति चायुभरं सवनाश्रव
सुजनता परितो प्रियतां दधे ।२४।

प्रियमवाप्य समेत्य समाः कलाः
भजनलीनसुकार्यपरायणः ।
गृहगतां समयेन सुपालितान्
सहजनां च विहाय गतो बनम् ।२५।

निरीक्ष्य विपुलं गृहं मुकुलितं लतावेतसं
मुमोच भवनस्य सः निखिलमोहबाधां मुदा ।
वने सुसमये सदा सुलभमस्ति शीघ्रं करे
यथा पुलिनतो जल न प्रथमे बहिर्गच्छति ।२६।

नयार्जितयशोऽमलं चकितमानसेनार्जितम्
द्रुतं सघनसारसं वहति लोहितं दोषजम् ।
सुमार्गरमणे मुदं सुलभते यदा साहसैः
तदा जितमनोभवो विकृतिमान् विमानैर्गतः।२७।

उदातवसतिर्लता कुसुमवाससज्जायिता
भृशं विततभावजं सपदि लभ्यते सादरम् ।
परार्थगतिना वशी समरदावमध्ये गतः
प्रधानबलमर्थितः पतितलोकशोकेऽगतः ।२८।

प्रशस्तपथिकोऽध्व यो जलदकालमाप्तः कथं
अमार्गविपिने तटे प्रमुदितेन गन्तुं प्रभुः ।
उपाश्य मलयवायुजं विजहति शान्तिःसदा
हतो भुवनपापकं स्मरति कोविदोऽध्वरं । २९।

चरितसुरमणीयं देवलोकेप्रसिद्धं
भरतमतसुदाम्नः लेखबद्धं कृतं यत् ।
भवतु जयहितायेन्द्रप्रभावानुजातं
रमयतु समभावैः सज्जनः सर्वकाले ।३०।

स्वगतनिखिलभावान् सर्वतः संन्नियम्य
द्रुतिजननरसांनां मुग्धकल्लोललीला ।
परिणतिदिशमेतु वेगभुग्नाऽनवद्या
सरतु महिमसारैः सूक्तिमन्दाकिनीयम् ।३१।

इतीन्द्र विरचिते सुदामचरित–महाकाव्ये मुक्तिनामैक विंशतिरन्तिमः सर्गः पूर्णतांगतः ।

# सुदामचरितस्य

## ॥ पद्यानुक्रमणिका ॥

# तृतीयसर्गस्थायाः छन्दोवर्षायाः विशेष छन्दः सूचिः

# नूतनानां छन्दसां लक्षणानि

१. तौ रो गुरुः कथ्यते विचित्रम् । १०
२. शब्दप्रकर्षो नु गुरुस्नौ यौ । १०
३. भो जगाः नृत्यशमं मतम् । १०
४. तौ जादनुज्ञा कथिता गुरुः १०
५. सजनाः गुरुः परिवशिता । १०
६. नयनगुरु स्तद भवरतः । ११
७. रात परस्तोरः लघु च मानिनी । ११
८. सुमानिनी जभभा अथ लगौं । ११
९. जतल्लगा कालविधा कथिताः । ११
१०. नीतिसमं कथितं भभभाश्भलगम् १२
११. नत चरौ;: ममता कथिता मयां । १२
१२. तौमः प्रसंगः सेवतां जमौ गीतौ । १२
१३. जतौ जतौ भद्रवती गुरुः संमता । १३
१४. बसन्तछन्दो कथितं जभौ जो मौगुः । १३
१५. लेखा तती जः भगुरु कथान्तकरी । १२
१६. तौ जो गुरुस्ते शिथिलों भवन्ति शुभाः । १३
१७. जतौ जतौ सा कथितात्रचा यत्र गौद्वौ । १४
१८. संदेशो मजौ तजौ यत्र गुरु द्वयी सः १४
१९. नोजः तजौभौ स्थानिकं कथांश रसाधृतम्
२०. यमौ समौ द्वौ गुण तों कथांशो वरांशः । १४
२१. केकारवा सूर्यविरामतो तस्तगौ तोमः । १५

२२. परम्परा जमजभभरायणधारा ।
२३. जतौ जतौ रः रवितो विरामं विकास्तिम् । १५
२४. तौ न। जतरगणतो रवेस्तः विरचिता ।
२५. तप्तो जतौ सः कथिता रवेस्तः व्यवहृति ।
२६. तौ भः रभो विकृटो ततौ रः दशविश्रमः ।
२७. जतौ जभौ मः कथितो रवेस्तस्तुरगामी ।
२८. तस्ती जमौ यः विरमः सूर्यात् या सेबिता सा ।
२९. तस्तो जमौ सः बिरमा सूर्यात् या शोभाधारा ।
३० इप्सा मोभ. ररयाः स्वेस्तो विरामचिन्हा ।
३१. चेष्टा मता तौ जभराः ससुन्नित मार्गदा ।
३२. सूर्याद्विरामें ततजाभमौतु कथौपतमु ।
३३. शिवदगतिः सा मान्या नः य भौ या ययुक्ता ।
३४. ह्लादिनी रजौ रजौ मयौगिता मता लोकैः ।
३५. छन्दो विकारः प्रथमे गुरुः सा विरामिता । १५
३६. स्वतंत्र ता मनोभावना कथिता ।
३७. लोकगताऽपि स्वच्छन्दता ।



# डा० – द्रदेव द्विवेदी 'इन्द्र' की रचनाएं

| | |
|---|---|
| १. सेवा… | … महाकाव्य |
| २. सेवान्वेशे | … काव्यसंकलन |
| ३. सेवाप्रगीत… | … प्रगीतसंकलन |
| ४. आशा पूरी हो | … … उपन्यास |
| ५. कुछ देखा सुना | … … निबन्धादिसंकलन |
| ६. स्वप्नदेशम् | … … नाटकम् |
| ७. जीवनरहस्यम् | … दर्शनम् |
| ८. इन्द्रदेशम् | … … कवितासंकलनम् |
| ९. इन्द्रगीतम् | … … प्रगीतसंकलनम् |
| १०. सुदामचरितम् | … … महाकाव्यम् |
| ११. उपहारः | … … उपन्यास. |
| १२. किञ्चिद् दृष्टं श्रुतम् | … … निबन्धादिसंकलनम् |
| १३, भवभूतेर्दार्शनिकी दृष्टिः | … … शोधप्रबन्धः |
| १४. आधुनिकसंस्कृतरूपकानुशीलनम् | … … शोधप्रबन्धः |
| १५. संस्कृतवाङ्मयानुशीलनम् | … … इतिहासः |
| १६. भवभूतिनाट्यव्याख्या | … … टीका |
| १७. सूक्तिमन्दाकिनी | … … सूक्तिसंग्रहः |
| १८. वाग्रीतिसंचयनम्–१ | … सूक्तिसंग्रहः |
| १९. वाग्रीतिसंचयनम्–२ | … … सूक्तिसंग्रहः |
| २०. समभिनन्दनम् | … … समीक्षणम् |

